गणधा। नेद इति किं ? वैपुल्ये संवि न मा भूत्। बहु सूपः। गर्गा गण।

+ कसेऽध्यर्द्धे ॥२५॥ कविषौ सविषौ चाद्य र्द्धशब्द स्थिसंज्ञा भवति। अध्यर्द्धेन क्रीतं अध्यर्द्ध कं। अध्यर्द्धशूर्पं। कस इति किं ? माभूत् धाये।

+ ऽर्द्धमाद् ॥ २६ ॥ अर्द्धपूर्वो पदंत कस विषौ स्थिसंज्ञो भवति। अर्द्धपंचमैः क्रीतं अर्द्धप चमकं। अर्द्धपंचमशूर्पं।

+ वतु ॥ २७ ॥ वत्वंतः स्थिसंज्ञो भवति। इयत्कः। कियद्धा। एतावत्कृत्व। यावत्कः। तावत्कः।

+ डति ॥ २८ ॥ डत्यंतः स्थिसंज्ञो भव ति। कतिकः। कतिधा। कतिकृत्व।

* ष्णांता षट् ॥ २९ ॥ षकारनकारांता स्थलता च संख्या षट्संज्ञा भवति। षट्। पंच। इति संति। अंतग्रहणमुपदेशार्थं। सप्तानामिति भवति। न शतानीमार्थो। इत्यप्रदशा "उभिक" इत्यमादय।

* सि सर्वादि ॥ ३० ॥ सर्वादय शब्दा सिसंज्ञा भवति। सर्वे। विश्वे। अन्ये। सर्वेषां। सर्वस्मै। सर्वस्मै। यस्मै। तस्मै। किमवेदशा "क" स्मै इत्यादय।

+ समं सर्वयुक्ते ॥३१ ॥ समशब्द सर्वयुक्ता र्थेषा सिसंज्ञा भवति। समस्मिन्। सर्वयुक्ते इति किं ? समे देश वसति।

* पूर्वपरावरदक्षिणोत्तरापराधराण्यसंज्ञायां व्यवस्थायां ॥ ३२ ॥ पूर्वादीनि अर्थो व्यवस्थायां वर्तमानानि सिसंज्ञानि भवंति। पूर्वस्मै। परस्मै। अवरस्मै। दक्षिणस्यै। उत्तरस्मै। अपरस्मै। अधर स्मै। असंज्ञायामिति किं ? उत्तराणां कुरूणां। व्यवस्था यामिति किं ? दक्षिणाय गायकाय देहि। प्रवीण्य मत्र प्रतीयते। न तु दिग्देशकालाद्यवधिनियमः।

+ स्वमज्ञातिधनाख्यायां ॥ ३३ ॥ स्वमित्ये तच्छब्दरूपं अज्ञातिधनाख्यायां सिसंज्ञं भवति। यत् स्वस्मै रोचते तत् स्वस्मै ददाति। यदात्मने रोचते तदात्मी याय ददातीत्यर्थः। अज्ञातिधनाख्यायामिति किं ? स्वाय ददाति। स्वाय क्षिप्यते। ज्ञातये धनाय वेत्य र्थः। आख्याग्रहणं किं ? ज्ञातिधनपर्यायस्य स्वशब्द स्य निषेधोऽन्यस्य तु मा भूत्। स्वस्मै पुत्राय। स्वस्मै गवे।

+ बहिर्योगोपसंव्यानेऽपुर्यंतरं ॥३४॥ बहि र्योगे उपसंव्याने चांतरं सिसंज्ञं भवति पुर् विमुच्य। अंतरस्मै जनाय देहि। बहिर्भूत पुरुषाय बाह्याय वाऽऽ साम्यक्तमित्यर्थः। अंतरस्मै वस्त्राय। उपसंव्याना योत्तरीयायोपसंव्यीयमानाय वा परिधानायेत्यर्थः। बहिर्योगोपसंव्याने इति किं ? अस्मिन्नंतरे शीतान्यु दकानि मध्य इत्यर्थः। अपुरीति किं ? अंतरायां पुरि वसति। प्राकाराद् बाह्यायामभ्यंतरायां वेत्यर्थः।

* पूर्वादिभ्यः ङस्योर्वा ॥ ३५ ॥ पूर्वादयो नवाकारांता ङिङस्योः परतः सिसंज्ञा वा भवति। पूर्वस्मिन्, पूर्वे। पूर्वस्मात् पूर्वात्। परस्मिन् परे। परस्मात् परात्। अवरस्मिन् अवरे। अवरस्मात् अवरात्। दक्षिणस्मिन् दक्षिणे। दक्षिणस्मात्, द क्षिणात्। उत्तरस्मिन् उत्तरे। उत्तरस्मात् उत्तरात्। अपरस्मिन्, अपरे। अपरस्मात् अपरा त्। अधरस्मिन् अधरे। अधरस्मात् अधरात्। स्वस्मिन् स्वे। स्वस्मात् स्वात्। अंतरस्मिन् अंतरे। अंतरस्मात् अंतरात्। आदिति किं ? पूर्व स्यां। पूर्वस्या। ङिङस्योरेव कार्यं विकल्प्यते अन्यत्र भवत्येव। एकस्मिन् पूर्वके।

* जसि ॥ ३६ ॥ पूर्वादयो जसि सिसंज्ञा वा भवति। पूर्वे पूर्वाः। परे, परा। अवरे अवराः। दक्षिणे दक्षिणाः। उत्तरे उत्तराः। अपरे अपराः। अधरे अधराः। स्वे स्वाः। अंतरे अंतराः।

प्रथमचरमतयाल्पार्द्धकतिपयनेमा ॥३७॥ प्रथमादयो जसि वा सिसंज्ञा भवंति। प्रथमे प्रथ माः। चरमे चरमाः। द्वितये द्वितयाः। द्वये द्वयाः। अल्पे अल्पाः। अर्द्धे, अर्द्धाः। कतिपये, कतिपयाः। नेमे नेमाः।

* क्रिर्द्वे ॥ ४८ ॥ द्वन्द्वे से सर्वादिर्वा प्रासि क्रिसंज्ञो भवति । कतरकतमे । कतरकतमाः । इतरान्यतरे । इतरान्यतराः ।

* न ॥ ४९ ॥ सर्वादिर्द्वन्द्वे से क्रिसंज्ञो न भवति । कतरकतमाय । पूर्वपरात् । कतरकतमानां ।

* बसे ॥ ५० ॥ सर्वादिर्बसे क्रिसंज्ञो न भवति । प्रियसर्वाय । अन्याय । त्र्यन्यात् । बग्रहणं किं ? परमसर्वस्मै । सग्रहणं किं ? आतिदेशिके बे निषेधो मा भूत् । एकैकस्मै देहि ।

भासे ॥ ५१ ॥ भासग्रहणे से सर्वादिः क्रिसंज्ञो न भवति । मासपूर्वाय । संवत्सरावराय । स वर्तमाने पुनः सग्रहणं भासार्थे वाक्येऽपि निषेधार्थं । मासेन पूर्वाय ।

* वा दिग्बे ॥ ५२ ॥ दिग्ग्रहणे बसे सर्वादिर्वा क्रिसंज्ञो भवति । दक्षिणपूर्वस्यै । दक्षिणपूर्वायै । उत्तरपूर्वासां । उत्तरपूर्वाणां ।

* तीयो क्रिति ॥ ५३ ॥ तीयसंज्ञो क्रिति क्रिसंज्ञो वा भवति । द्वितीयस्मै । द्वितीयाय । तृतीयस्यै । तृतीयायै । क्रितीति किं ? द्वितीयानां ।

* तास्याः स्तोऽस्तः ॥ ५४ ॥ तावस्य स्थाने विधिरुच्यमानो ते वर्तमानस्यास्य स्थाने भवति । मदादेरः—स्य । स्थानग्रहणं स्वस्वाम्यादिनिरासार्थं । धंत इत्यादिमध्यनिवृत्त्यर्थं । मञ्जु सर्वादेशनिवृत्त्यर्थं ।

ङित् ॥ ५५ ॥ ङिदादेशोऽन्त्ये वर्तमानस्यान्त्यस्य स्थाने भवति । युष्मदस्मदोऽस्त्व् वाऽस्मत्प्रो—यौष्माकीणः । आस्माकीनः । नियमोऽयं—ङिदेवानेकाल् भवत्स्य स्थानेऽन्त्यः तानिर्दिष्टस्य सर्वस्य स्थाने भवति । भूयः वच्—वक्ता ।

* स्वासन्नः ॥ ५६ ॥ इह स्वासन्नस्यासन्नस्य प्रसङ्गे स्थानार्थगुणप्रमाणैर्यथासन्नमासन्न एव विधिर्भवति । स्थानतः—दध्यत्र । साध्विदं । अर्थतः—वतण्डी चासौ युवतिश्च वातण्ड्ययुवतिः । गुणतः—पाकः । भागः । प्रमाणतः—अमुष्मै । अमू म्याम् ॥ अत्र स्तोतेस्मत्र स्यामानुवृत्तेन प्रमाणतोऽकारः । सुष्ठ्वासन इति किं ? वाग्घसति ।

+ पुर्वा योगे ॥ ५७ ॥ पुर्वा संबंधिनां यो विधिः स योगे संबंध एव भवति । श्वशुरायः—श्वशुर्यः । श्वशुर इति कस्यचिन्नाम तस्मात् श्वशुरस्यापत्यं 'अत इञ्' एव । श्वाशुरिः ।

रतोऽणु ॥ ५८ ॥ ऋवर्णस्य स्थाने अण् शिष्यमाणः रपरो भवति । किरति । पितुः । अणिति किं ? मातापितरौ । उरिति किं ? गेयं ।

परस्यादेः ॥ ५९ ॥ तानिर्देशेन परस्य कार्यं शिष्यमाणं तस्यादेरलः स्थाने भवति । द्वीपतर्गो रीद्वेपोनात्—द्वीपः । ईपासः—आसीनोऽधीते ।

शिरसर्वस्य ॥६०॥ शिदादेशः सर्वस्य स्थाने भवति । जसः शी—के । जस्शसोः शिः धनानि संति ।

टिदादिः ॥ ६१ ॥ टित् आगमः स तानिर्दिष्टस्यादिर्भवति । वक्तेरिट्—भविता ।

किदंतः ॥ ६२ ॥ कित् आगमः स तानिर्दिष्टस्यांतो भवति । दिति इति तुक्—धर्मवित् ।

परोऽन्त्यो मित् ॥ ६३ ॥ मित् आगमः स तानिर्दिष्टस्यान्त्योऽन्त्यात् परो भवति । इदितोर्नुम् वंदे कुमेश्वरं ।

* स्पर्द्धे ॥ ६४ ॥ द्वयोरन्यार्थयोस्तुल्यबलयोरेकत्र प्राप्तो यः संघर्षः स स्पर्द्धस्तस्मिन् परं कार्यं भवति । सुपि दी—दवाभ्यां । यही झल्येत्—देवेषु । देवेभ्यः—इत्यत्र द्वितयं प्राप्तं परमेत्वमेव ।

* स्थानीवानल्विधौ ॥ ६५ ॥ स्थानीव भवत्यादेशः । धुयुष्मदस्मद्भुविपदादेशाः प्वादिवद्भवंति, अस्तेर्भूः-भविता । तृच् सिद्धः । गुणवदादेशः । प्रयाणां । गोर्दीर्घं । कृद्वत्तदादेशः । प्रहृत्य । कृत्वा-गुरुः । इत्वद् इत्वादेशः । आक्षिकः । मूसत्वा । सुप्वत् सुपादेशः । भमयः । सुपि दीर्घं । मिङ्वन्मिङादेशः । अभूताम् । मिङ्गन्तत्वपदं । भवदादेशः । अचिनुत । क्रियादेशनिषेधः । पदवत्पदादेशः

• टेःस्यापच ॥ ७६ ॥ अचां मध्ये योऽन्त्योऽच् तदादि शब्दरूपं टिसंज्ञं भवति । धर्मविद्—अत्रेण्डम्द । तत्त्वभुद्—अत्रेण्डम्द । आताम्—आम्शब्द । टिप्रदेशा टिदरे" इत्यादय ।

उपांत्यालुङ् ॥ ७७ ॥ अन्त्यात्तस्य समीपोऽल् उङ्संज्ञो भवति । पच्—इत्यकार । पाचकः । भिद्—इतीकार । भेत्ता । व्यवहितस्यानिवृत्त्यर्थमुपान्त्य ग्रहण । उङ्प्रदेशा "उङोऽत" इत्यादय ।

येनाल्विधिस्तदंतायो ॥ ७८ ॥ येनाल्वा इना वा यो विधिर्विधीयते स तदन्तस्य भक्ति च या विधिस तदादौ भवति । योऽचोऽप्यास्तु । सरोरुह । चेय । चित्रा । हस्न्नुधभुवाऽर्थाणुम्यो । चित्तमनु । निश्चिनु ।

+ न सस्येऽनुगिति ॥ ७९ ॥ सविधौ असिधौ च तदंतविधिर्नास्ति उगिकार्य विहाय । कः परमशिव । इस्यो न भवति । सौत्रनादि । नडादे फण न भवति । अनुगिदीति किं ? भवती । अतिभवती ।

+ यस्परस्तदादे ॥ ८० ॥ यस्मात् प्रकृतिविशेषात् यस्या विधीयते स तदादे समुदायस्य भवति । मातृभोगीणः । समुदायस्य सुबंतत्वमेकपदत्वात् पत्वं । पुत्रकाम्यति । सेयं क्यन्यो माधिकारात भवति । महांत पुत्रमिच्छति ।

+ स्त्री न्यङ् ॥ ८१ ॥ यस्मात् स्त्रीप्रत्ययस्तदादे र्न्यङ् अप्रधानमेव भवति । अतिकारीषगंध्यबंधु । बंधौ परे न्यस्य प्रधानभूत ईस् न भवति । न्यङिति किं ? परमकारीषगंधीबंधु ।

+ कृत् सतिकारकस्यापि ॥८२॥ कृत्सत्स्य सतिसत्कस्यापि सकारकस्यापि तदादे समुदायस्य ग्राहको भवति । अपिश्रब्दात् केवलस्यापि । उदके विशीर्णं । अवतप्तेनकुलस्थित । भस्मनिहुत ।

• यस्याच्स्वादिरेपू ॥ ८३ ॥ यस्य शब्दस्याचां मध्य आद्यच् एप् स दुसंज्ञो भवति । शालीय । औपगवीय । कतिकपनीय । अस्तित्वति कृत्समिवक्षार्थं । आप्ति ग्रहणं किं ? समासमयन आतः समासनयन । एपीति किं ? दत्तस्यायं दात्त । दुप्रदेशा "दोरछ"—इत्यादय ।

+ देशे एपेङ् शैषिके ॥ ८४ ॥ यस्य शब्दस्य देशे एव वर्तमानस्य अचामाद्य एङ् स दुसंज्ञो भवति शैषिके स कर्तव्य । सैपुरिकी । सैपुरिका । ठग्मिठी । भोजकटीय । देशे किं ? दैवनंदिन ।

• प्राग्देशे ॥ ८५ ॥ पूर्वदेशे वर्तमानस्य यस्य शब्दस्याचामाद्य एङ् स दुसंज्ञो भवति शैषिके से कर्तव्य । एणीपचनीय । गोनर्दीय ।

त्यदादि ॥ ८६ ॥ त्यदादयो दुसंज्ञका भवति । मदीय । तदीय । किमीय ।

• वा स्तो ॥ ८७ ॥ स्तोर्वा दुसंज्ञा स्यात् । देवनंदीय । दैवनंदिन । पवनदीयं । पावनदिनं ।

• तवसात्त्राथाम्कृत्वसुसुञ्वद्याम्कृत्वा मुतुमुसुम्भिङ्काभसन्यवसारादया झि ॥८८॥ तत् तस् सात् त्रा थस् कृत्वस् सुच् वत् या आम् कृत्वा अम् तुम् इत्येवमादय सुम्भिङ्प्रतिरूपा विसर्गा अन्यच प्रधानभूता स्वरादयश्च झिसंज्ञका भवति । तदिति प्रत्याहार । "कार्यस्तसि" इत्यारभ्य आ"एधात्" तकारेण । तत्—इथा । तस्—पीलुमूलतः । सात्—भस्मसात् । त्रा—राजत्रा वसति । शस्—बहुश । कृत्वस्—शतकृत्व । सुच्—द्वि, त्रि । वत्—मुनिवत् वृत्त । या—बहुधा । आम्—उद्दैश्च । कितमां । कितरां । कृत्वा—कृत्वा । अम्—भोज भोजं । स्वादुंकार । तुम्—कर्तुं । सुम्भिङ्काम—रात्री । मातरामा । अस्ति । सस्ति । ति—अदःकृत्य । अन्ययस्वरादि—स्व तिष्ठति । स्वः पश्यति । परमार्थे । अन्ययगिति किं ? अस्तुवैसी । मस्तुवैस । झिप्रदेशा "झेः" इत्यादय ।

• गाङ्कुट्यादिभ्योऽञ्णिन्ङिद्वत् ॥ ८९ ॥ गाङ् कुटादीनां च अञ्णिति से परत ङिद्वत् कार्यं भवति । अध्यगीष्ट । अध्यगीषाताम् । कुटिता । कुटितुं । कुटितव्यं । कुटित्वा । पुटिता । पुटितुं । पुटितव्यं । पुटित्वा । "अञ्णि" इति किं ? उत्कोटकः । उत्कोटः । उत्कोटयति ।

• इटि विज ॥ ९० ॥ विजेरिडादौ से ङिद्वद् भवति । उद्विजिता । उद्विजितव्यं । इटीति किं ? उद्वेगः ।

दीनां च सति क्त्वाप्रत्यये किद्वद् वा भवति । ग्रथित्वा । ग्रन्थित्वा । ग्रथित्वा । ग्रन्थित्वा । गुफित्वा । गुंफित्वा । वधित्वा । वन्धित्वा । खुन्थित्वा । खुंचित्वा । ऋतित्वा । अर्तित्वा । तृपित्वा । तर्पित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । नाकुमहणं किं ? कोथित्वा । गोफित्वा । धतग्रहणं किं ? ध्वंसित्वा । ऋर्थेति किं ? ग्रथितः ।

० व्युङ्घोऽधा हल सनवत्वो ॥ १११ ॥ उकारेकारोपधः धातुः कारान्तस्य हलादेः सेटि सनि क्त्वाप्रत्यये च किद्वद् वा स्यात् । दिद्युतिषते । दिद्योतिषते । द्युतित्वा । द्योतित्वा । लिलिखिषति । लिलेखिषति । लिखित्वा । लेखित्वा । व्युङ् इति किं ? विव र्तिषते । वर्तित्वा । अव इति किं ? सिसेविषते । सेवित्वा । हलादेरिति किं ? एषिषिषति । एषित्वा । सटीति किं ? बुभुक्षते । भुक्त्वा ।

युक्तवद्युषि लिंगसंख्ये ॥ ११२ ॥ उसर्थे युक्त इव लिंगसंख्ये भवतः । प्रत्ययार्थेन युक्तत्वात् प्रकृत्यर्थो युक्त इत्युच्यते । पञ्चालानां निवासो जनपदः पञ्चालाः । अंगाः । वंगाः । कलिंगाः । कुरवः । उसीति किं ? आमलकं फलं । लिंगसख्ये इति किं ? बदर्या अदूरभवो ग्रामो बदरी ग्रामः । तस्य वनं बदरीवनं ।

+योरेव मथा । ११३ । से पुंसूत्रस्यैव बहु विषयस्य युक्तवद्युषि लिंगसंख्ये स्तः । मथुराया पञ्चालस्य मथुरापञ्चालकः । योरेवेति किं ? पञ्चालमथुरे । बहोरिति किं ? गोदमथुरा ।

×मंपूलमवितकादिषु ते ॥११४॥ जम्वादि षु लवलिकादिषु च यथासंख्यं ते लिंगसंख्ये युक्तवद्युषि भवतः । जम्ब्वा अवयवो जम्बू । जम्बौ । जम्बूफलानि । द्राक्षा फलानि । मल्लिका पुष्पाणि । खर्जूरिकस्य पर्वतस्यादूरभवानि खर्जूरिक वनानि ।

+गुणानामभ्रात् ॥११५॥ गुणानां विशेषणवाचिनां जातेरम्यस्य विशेष्यस्य लिंगसंख्ये स्तः । गुणवद्युषि । गुणलक्षणसम्भेदात् । शुक्लं वस्त्रं । शुक्लः पटः । शुक्ला शाटी । कृतं वस्त्रं । कृतः पटः । कृता शाटी । माधुरं कुलं । माधुरः पुमान् । माधुरी स्त्री । निर्मधुरं कुलं । निर्मधुरः पुमान् । निर्मधुरी स्त्री । गुणानामिति किं ? बदरी वृक्षः । "अजाते" इति किं ? पञ्चालाः जनपदः ।

×न युषि ॥११६॥ नरि मनुष्येऽर्थे उषि गुणानां लिंगसंख्ये न स्तः । चञ्चेव मनुष्याः चंचा अभिरूपः । नृग्रहणं किं ? पंचाला रमणीया । बहुबा । बह्वन्नपाका । बहुक्षीरघृता । बहुमांस्यफला । उर्सीति किं ? पट्टर्षी नारी ।

इति जैनेन्द्रव्याकरणे सप्तार्णवचन्द्रिकायां प्रथमस्याध्यायस्य प्रथमः पादः ।

---

## प्रथमाध्याये द्वितीयः पादः ।

भूवादयो धुः ॥१॥ भू इत्येवमादयः शब्दा धुसंज्ञा भवति । भू एधे स्पर्द्ध गाधृ । भवति । एधते । स्पर्द्धते । गाधते । धुप्रदेशा "धोर्यङ्" इत्येवमादयः ।

अकर्मको धिः ॥ २ ॥ अकर्मको यो धुः स धिसंज्ञो भवति । अविद्यमानकर्मकोऽविवक्षितकर्मको ऽप्यकर्मकः । धिप्रदेशा "धि" इत्येवमादयः ।

अप्रयोगीत् ॥ ३ ॥ शास्त्रे कार्यार्थमुपदिश्यमानो वर्णः प्रयोगे न श्रूयते यः स इत्संज्ञो भवति । अण्—अच्—हल्—विमिच्—जे—पायवस्थिक । इत्प्रदेशा "सालेमादि" इत्येवमादयः ।

यथासंख्यं समाः ॥ ४ ॥ समाः शिष्यमाणाः यथासंख्यं भवति । मिपयसृपवतसोऽमततां । प्रथमस्यस्य मिपः प्रथमस्य्योऽमित्यादि ।

स्वरितेनाधिकारः ॥ ५ ॥ स्वरितेनार्थ प्रतिज्ञया अधिकारो वेदितव्यः । 'सः' परः" इत्यादि ।

● कंदितो दः ॥ ६ ॥ ककारेत ऐकारेतश्च धोर्दो भवति । शीङ्—स्वप्ने । इङ्—अधीते । एधे—एधते । आसे—आस्ते ।

दौ ॥ ७ ॥ दावर्थे दो भवति । भूयते भवता । आस्यते भवता । क्रियते कटः । ह्रियते भारः ।

---

१ भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ।
भ्वादयश्चमिको वा भूर्वादिर्भ्वादयोऽपि वा ॥ १ ॥
शुभो वाऽर्थे वर्तते वादयोऽर्थिके इति ।
भूवादयो इति ज्ञेया धुसंज्ञा धातवऽवका ॥ २ ॥

कर्त्तरि के ॥ ८ ॥ कर्त्तरि कारके मार्थे दो भवति। व्यतिभवत। व्यतिहनते। व्यतिपचते।

+हृवहः ॥ ९ ॥ हृवहिभ्यां कर्त्तरि म दो भवति। संप्रहरते राजानः व्यतिवहते मया।

• न गतिहिंसार्थभ्दे ॥१०॥ गतौ हिंसायां शब्दे चार्थे वर्तमानाद्धो कर्त्तरि मे दो न भवति। व्यतिगच्छति। व्यतिघ्नन्ति। व्यतिहिंसंति। व्यतिभवति। व्यतिशब्दयंति। व्यतिजल्पति।

परस्परान्योऽन्येतरेतरे ॥ ११ ॥ एतैर्योगे मार्थे दो न भवति। परस्परस्य व्यतिलुनति। अन्योऽन्यस्य व्यतिपुनंति। इतरेतरस्य व्यतिभवति।

+गेर्वोद्वसो ॥ १२ ॥ गे परार्भ्यां उद्वसिभ्यां दो वा स्यात्। समूहति। समूहते। निरस्यति। निरस्यते। गेरिति किं ? ऊहते। अस्यति।

निर्विशः ॥ १३ ॥ निपूर्वाद्विशेर्दो भवति। निविशते। निविशाते। निविशंते।

परिव्यवक्रियः ॥ १४ ॥ पर्योविभ्य क्रीणा तेर्दो भवति। परिक्रीणीते। विक्रीणीते। अवक्रीणीते।

• विपरो जेः ॥ १५ ॥ विपराभ्यां जयतेर्दो भवति। विजयते। पराजयते।

क्रीडोऽनुपर्याङः ॥ १६ ॥ अन्वादेः क्रीडे र्दो भवति। अनुक्रीडते। परिक्रीडते। आक्रीडते।

समाऽकूजे ॥ १७ ॥ संपूर्वात् क्रीडेर्न्ये मककूजेऽर्थे। संक्रीडते। अकूज इति किं ? संक्रीडंति शकटानि।

•श्रुवः ॥ १८ ॥ श्रुणोतेर्दो भवति। संश्रुणुते। संश्रुणाते। संश्रुण्वते शब्दम्।

• गिरादोमि ॥ १९ ॥ सम गिरतेर्न्मवसोमि प्रतिज्ञाने। संगिरते सर्वज्ञं। ओमीति किं ? संगिरति ग्रासं।

• स्थः ॥ २ ॥ तिष्ठतेरोमि दो भवति। सर्वमनेकान्तमर्हन्मातिष्ठते।

•संव्यवप्रात् ॥ २१ ॥ समादिपूर्वात् तिष्ठतेर्दो भवति। संतिष्ठते। वितिष्ठते। अवतिष्ठते। प्रतिष्ठते।

ईप्सास्थेयोक्तौ ॥ २२ ॥ ईप्सायां परपरितोषार्थमात्मरूपाविष्करणम् स्थेयोक्तौ च संशय विवादे कृत्वा वा निश्चयकरण स्था दो भवति। तिष्ठते कन्या छात्रेभ्य। मयि तिष्ठते। मयि तिष्ठते निर्णयः।

उद ईहे ॥ २३ ॥ उत्पूर्वात् स्थो दो भवति ईहेऽर्थे। धर्मे उत्तिष्ठते। ईह इति किं ? आसनादुत्तिष्ठति।

•मंत्रेणोपात् ॥२४॥ उपात् स्थो दो भवति मंत्रेण करणभूतेन चेत् सोपस्थितिः। आगस्त्या उपतिष्ठते। गृष्टमा उपतिष्ठते। मंत्रेणेति किं ? भर्त्तारमुपतिष्ठति भार्या यौवनेन।

+देवार्चासंगममैत्रीपथिषु ॥२५॥ उपात् स्थो दो भवति देवार्चादिषु। जिननाथमुपतिष्ठते। यमुना गंगामुपतिष्ठते। महामात्रानुपतिष्ठते। अयं पंथा स्रुघ्नमुपतिष्ठते।

+वा लिप्सौ ॥ २६ ॥ उपात् स्था लिप्सायां दो वा भवति। भिक्षुर्दातृकुलमुपतिष्ठते उपतिष्ठति वा।

मे ॥ २७ ॥ उपात् स्थो मेर्दो भवति। यावदभुक्तमुपतिष्ठते। मेरिति किं ? स्वामिनमुपतिष्ठति।

समो गमृच्छिप्रच्छिस्वरत्यर्तिश्रुविदृशः ॥२८॥ सपूर्वेभ्यो गमादिभ्यो भिभ्यो दो भवति। संगच्छते। संपृच्छते। संस्वरते। समियृते। समरिष्यते। संशृणुते। संशृणुते। संविन्ते। संपश्यते। भेरिति किं ? संगच्छति ग्रामं। संपश्यति देवं। समवति धर्मं।

निसंव्युपाऽह्वः ॥ २९ ॥ न्यादिभ्यो ह्वः ह्वयतेर्दो भवति। पुत्रं निह्वयते। संह्वयते। विह्वयते। उपह्वयते।

आङः स्पर्द्धे ॥ ३ ॥ आङ्पूर्वात् ह्वो दो भवति स्पर्द्धेऽर्थे। मल्लो मल्लमाह्वयते। स्पर्द्ध इति किं ? गामाह्वयति गोधुक्।

+गमः प्रतीक्षे ॥ ३१ ॥ गमेर्ण्यन्तादाङ्पूर्वात् दो भवति प्रतीक्षे कालहरणे। आगमयस्व तावत्। प्रतीक्ष इति किं ? विद्यामागमयति।

+नुप्रच्छ ॥ ३२ ॥ आङ्पूर्वाभ्यां नुप्रच्छाभ्यां दो भवति । आनुते शृगाल । आपृच्छते गुरून् ।

*दात्र ॥ ३३ ॥ ददातेराङ्पूर्वाद्दो भवति । विद्यामादत्ते । धनमादत्ते ।

*न व्यसने ॥ ३४ ॥ दाञो दो न भवति व्यसने विकसनेऽर्थे । विपादिकां व्याददाति ।

+स्वांगकर्मकात् ॥ ३५ ॥ दाञः स्वांगकर्मकात् व्यसनेऽर्थे दो न भवति । आस्यं व्याददाति । स्वांगकर्मकादिति किं ? व्याददते पिपीलिका पतंगमुखम् ।

*यमूभो धम ॥ ३६ ॥ यमेर्हस्तेश्च विसङ्ककात् स्वांगकर्मकादाङ्पूर्वाद्दो भवति । आयच्छते । आयच्छते । आहते । आगाते । आहते । आयच्छते पाणिं । आहते वक्षः । वेरिति किं ? आयच्छति रज्जुं । आहति पाप ।

*व्युत्तपम ॥ ३७ ॥ व्युद्भ्यां तपेर्दो भवति धे स्वांगकर्मकाच्च । वितपते । उत्तपते राजा । वितपते पृष्ठं । वेरित्येव । उत्तपति सुवर्णं सुवर्णकारः ।

*वे कृ ॥३८॥ विपूर्वात् कृञो धेर्दो भवति । विकुर्वते सैन्धवाः साधुदान्ताः । भक्तस्य पूर्णाः छात्रा विकुर्वते ।

*शब्दकर्मण ॥ ३९ ॥ वे कृञो दो भवति शब्दकर्मकात् । क्रोष्टा विकुरुते स्वरान् । ध्वांक्षो विकुरुते स्वरान् । शब्दकर्मण इति किं ? विकरोति कटं ।

*गंधनावक्षेपसेवा साहसप्रतियत्नप्रकथनोपयोगे ॥ ४० ॥ एष्वर्थेषु कृञो दो भवति । अप मिममुत्कुरुते । श्येनो वर्तिकामुपकुरुते । गणकान् प्रकुरुते । परदारान् प्रकुरुते । काण्ड गुणस्योपस्कुरुते । जनापवादान् प्रकुरुते । शतं प्रकुरुते धर्माय । एष्विति किं ? यम करोति ।

प्रसहनेऽधे ॥ ४१ ॥ अधिपूर्वात् कृञो दो भवति प्रसहने पराभिभवेऽर्थे । वादिनोऽधिकुरुते । शत्रुमधिकुरुते । प्रसहन इति किं ? अधिकरोति ।

*पूजोत्संगापनीतिज्ञानभृतिगणनव्यये न्यः ॥४२॥ पूजादिष्वर्थेषु नयतेर्दो भवति । नयते चार्वी स्याद्वादे । बालकमुदानयते । माणवकमुपनयते । गयते चार्वी तत्त्वार्थे । कर्मकरानुपनयते । भृतिदानेन स्ववशी करोति । मद्रका कारं विनयन्ते । राजग्राह्यं भागं निर्यातयन्तीत्यर्थः । शतं विनयते । व्ययीकरोति । एष्विति किं ? नयत्यजां ग्रामं ।

*कर्तृस्थे कर्मण्यमूर्ती शमे ॥ ४३ ॥ कर्तृस्थेऽर्थे कर्मणि मूर्तिवर्जिते विवक्षिते नयतेर्दो भवति शमेऽर्थे । क्रोधं विनयते । दर्पं विनयते । कर्तृस्थे इति किं ? मुनिः परस्य क्रोधं विनयति । कर्मणीति किं ? बुद्ध्या विनयति । अमूर्ताविति किं ? गडुं विनयति । शम इति किं ? क्रोधमानयति ।

+हृगतिताच्छील्ये ॥ ४४ ॥ हरतेर्दो भवति गतेस्ताच्छील्ये । पैतृकमश्वा अनुहरन्ते । मातृकं गावोऽनुहरन्ते । गतिस्वभावमनुकुर्वन्ति ।

+शिक्षशब्दायेर्जिज्ञासाधर्षमनाशिषि ॥४५॥ शिक्षादिभ्यो जिज्ञासादिषु दो भवति । शक्ते समंतात् शिक्षा । जिज्ञासायां-विद्यां शिक्षते । तुभ्यं शपते । सर्पिषो नाथते । एष्विति किं ? मोक्षं शिक्षति ।

वृत्तिसर्गतायने क्रमः ॥ ४६ ॥ वृत्त्यादिष्वर्थेषु क्रमर्दो भवति । तत्त्वेऽस्य क्रमते बुद्धिः न प्रतिबध्यते इत्यर्थः । जैनेन्द्राध्ययनाय क्रमते उत्सहते इत्यर्थः । क्रमतेऽस्मिन् शास्त्राणि सतन्यते पास्यते वा ।

परापात् ॥ ४७ ॥ वृत्त्यादिषु परोपाभ्यां क्रमेर्दो भवति । पराक्रमते । उपक्रमते ।

ज्योतिरुद्गमावाङः ॥ ४८ ॥ आङ्पूर्वात् क्रमेर्दो भवति ज्योतिषां सूर्यादीनामुद्गमनेऽर्थे । आक्रमते सूर्यः । आक्रमते चन्द्रः । ज्योतिरुद्गमाविति किं ? शिशुराक्रामति कुतपं ।

वेः स्वार्थे ॥ ४९ ॥ विपूर्वात् क्रमः स्वार्थे दो भवति । सुष्ठु विक्रमते । साधु विक्रमते । स्वार्थे इति किं ? विक्रामत्यजिनसंधिः ।

*प्रोपात् समर्थात् ॥ ५० ॥ प्रोपाभ्यां समर्थाभ्यां क्रमेर्दो भवति । प्रक्रमते । उपक्रमते भोक्तुं । प्रारमते इत्यर्थः ।

वाऽगेः ॥ ५१ ॥ अगिपूर्वात् क्रमेर्दो भवति वा । क्रमते क्रामति । अगेरिति किं ? संक्रामति ।

भवत्ययज्ञपात्रे । प्रयुङ्क्ते । नियुङ्क्ते । उपयुङ्क्ते । न्युङ्क्ते । अयज्ञपात्र इति किं ? द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । विना सिद्धे नियमार्थमुद्ग्रहणे । इस्वतेषु-उद एव नान्यस्मात् । दुयुनक्ति । सयुनक्ति ।

*अपस्कृ ॥ ७४ ॥ अपस्किरतर्दो भवति । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा आश्रयार्थी । अपग्रहणं किं ? उपस्किरति ।

*भुजोऽत्र ॥ ७५ ॥ भुजर्दो भवत्यत्रेऽपालने । भुङ्क्ते । भुञ्जाते । भुञ्जते । अत्र इति किं ? भुनक्ति महीं धर्मः ।

*नाऽण्णौ ये णिकर्तृकाण्णे ॥ ७६ ॥ अण्यन्तावस्थायां यो धुर्म णिकर्तृकस्तस्माण्ण्यन्ताद्दो न भवति । आस्ते देवदत्तः । आसयति देवदत्तं । शेते माणवकः । शाययति माणवकं । अणाविति किं ? आरोहयमाणं प्रयोजयति आरोहयते । धारिति किं ? कटं कुर्वाणं प्रयोजयति कारयते । प्राणिकर्तृकाण्णिति किं ? शुष्यन्ति व्रीहयः शोषयते व्रीहीनातपः । "णिचः" इति प्राप्तिः प्रतिषिध्यते ।

*यत्कर्म यत् कर्ताऽनाध्यानेऽस्मृतौ ॥ ७७ ॥ अण्यन्तावो णि तदन्ताद्दो भवत्यस्मृतावनाध्याने । णिमकृतेरणौ यत् कर्म स चेत् कर्ता अनाध्या स्यात् । पश्यति भक्ता राजानं । दर्शयते भक्तान् राजा स्वयमेव । यत्कर्मेति किं ? छुनाति दात्रेण लावयति दात्रं स्वयमेव । कर्तेति किं ? आरोहति हस्तिनं हस्तिपकः । आरोहयत्येनं महामात्रः । अनाध्यान इति किं ? स्मरत्यात्मा । स्मरयत्यात्मा । अस्मृताविति किं ? स्मरति वनगुल्म कोकिलः । स्मारयत्येनं वनगुल्मः ।

*भीस्म्योर्हेतुभये ॥ ७८ ॥ ण्यन्ताभ्यां भीस्मिभ्यां दो भवति हेतुभयेऽर्थे । मुण्डो भीषयते । जटिलो भीषयते । मुण्डो विस्मापयते । हेतुभय इति किं ? कुञ्चिकयैनं भाययति ।

वंचने गृधिवंचे ॥ ७९ ॥ गृधिवञ्चिभ्यां ण्यन्ताभ्यां दो भवति वञ्चने विसंवादनेऽर्थे । गर्धयते । वंचयते माणवकं । प्रतारयतीत्यर्थः । वञ्चन इति किं ? श्वानं गर्धयति । अहिं वञ्चयति ।

*ल्यालीङोऽभार्च्ये च ॥ ८० ॥ लिनातिलीयतिभ्यां ण्यताभ्यां दो भवत्यर्चाभिभवार्थयोः वं चन च । जटाभिरालापयते । श्येनो वर्तिकामपलापयते । कस्त्वामुल्लापयते ।

*मिथ्याकृञोऽभ्यासे ॥ ८१ ॥ मिथ्याशब्दनयोगे कृञो ण्यताद्दो भवत्यभ्यासेऽर्थे । पदं मिथ्या कारयते । स्तुतिं मिथ्या कारयते । मिथ्येति किं ? सूत्रं साधु कारयति । अभ्यास इति किं ? सकृत्पदं मिथ्या कारयति ।

*णितः फलेशे ॥ ८२ ॥ णितो धोर्दो भवति क्रियायाः फलेश कर्तरि । पचते । लुनीते । कुरुते । फलेश इति किं ? पचति भक्तिकराः । वपति मलकाः ।

वदोऽपात् ॥ ८३ ॥ अपाद् वदर्दो भवति फलेश । एकान्तमपवदते । अपवदते ।

समुदाङ्भ्यमोऽग्रंथे ॥ ८४ ॥ समादिभ्यो यमर्दो भवत्यग्रंथेऽर्थे । व्रीहीन् संयच्छते । भारमुद्यच्छते । पात्रमायच्छते । अग्रंथ इति किं ? उद्यच्छति चिकित्सां वैद्यः ।

ज्ञाऽनोः ॥ ८५ ॥ आनाश्ज्ञेरदो भवति । गां जानीते । अश्वं जानीते । अनोरिति किं ? स्वर्गं प्रजानाति ।

णिचः ॥ ८६ ॥ णिजन्ताद्दो भवति फलेशे । ओदनं पाचयते । कटं कारयते । फलेश इति किं ? परस्य कटं कारयति ।

पाऽऽस्याऽऽङ्यमाऽऽयसपरिमुहरुचिनृत्वदवसः ॥ ८७ ॥ पादिभ्यो ण्यन्तेभ्यो न भवति । पाययति । आदयते । दमयते । आयामयते । आयासयते । परिमोहयति । रोचयते । नर्तयति । वादयते । वासयते ।

वा प्यागम्ये ॥ ८८ ॥ वाचा पदान्तरेण गम्यमाने फलेशे दो वा भवति । स्वं यज्ञं पुनीते पुनाति वा । स्वं वाक्यमपवदते अपवदति वा । स्वान् व्रीहीन् संयच्छते, संयच्छति वा । स्वां गां जानीते, जानाति वा । स्वमन्नं पाचयते पाचयति वा । स्वं पुत्रं पाययते, पाययति वा । गतैः पञ्चभिर्योगैर्नित्ये दे प्राप्ते वाचा योगेऽनेन विकल्पः ।

स्फे ऽ ॥ ११२ ॥ स्फपरे प्र स्वो म-वति । सद्य । कुञ्च । ह्रुवा । स्त्रप्रदेशा "सरोर्दुव" इत्याद्य ।

दी ॥ ११३ ॥ दीर्घ रसज्ञो भवति । ईहा । ईक्षा । ईक्षांचक्रे ।

यस्ये तदादिर्गु ॥ ११४ ॥ यस्य स यस्य तस्मिन् परत तदादि शब्दरूप गुसज्ञ भवति । शुशेति । करोति । करिष्यति । यस्य इति किं ? हे देवदत्त इ पश्येत्यत्र आदरैप् प्राप्नोति । दध्युने त्यत्र एरित्यादेरिश च । न चैवं । तदादिरिति किं ? करिष्यामीति । अनेकमपि प्रांतस्य दीत्व । गुप्रदेशा 'गो' इत्यादय ।

+मिञा वाक्यं ॥ ११५ ॥ मिश्विन प्रयुज्य-मानेनाप्रयुज्यमानेन वा प्रभ्रासत्तेसस्यैव मिञंतस्य विशेषणं शब्दरूप वाक्यसज्ञ भवति । धर्मो वो रक्षतु । देवन्त्वन कर्तव्य । वाक्यप्रदेशा 'वाक्यटेष्व" प्रभृतय ।

सुम्मिडंतं पदं ॥ ११६ ॥ सुबंत मिडत च पदसंज्ञ भवति । धर्म । अस्ति । पदप्रदेशा 'पदस्य' प्रभृतय ।

न क्ये ॥ ११७ ॥ नांतस्य क्ये परत पद सज्ञा भवति । राजीयति । राजायते । क्ये स्याप यामिति पदत्वसिद्धौ किमर्थमिदं ? नियमार्थमिद नांत मेव क्य पदसज्ञ भवति नान्यत् । वाच्यति । मुच्यति ।

सिति ॥ ११८ ॥ सिति प्रे परत पूर्वं पद संज्ञ भवति । भवतमुणछम् । भवदीय । ऊर्णायु शुभम्यश्च युस । ऊर्णायु ।

स्वादावधे ॥ ११९ ॥ अधे स्वादौ परत पूर्वं पदसज्ञ भवति । पयोभ्यां । राजभ्यां । राजभि । राजत्वं । राजता । राजतर । राजतम । अघ इति किं ? राजानौ । राजान ।

याचि भ ॥ १२० ॥ यकारादावजादौ च स्वादावधे परत पूर्व भसज्ञ भवति । गार्ग्य ।

¹ । वेदरत्वमम्मस्वसूत्रा परतो वृत्तकाघरितैषु प्रसार यरय इति निरोधरथ भवति ।

दाक्षि । मचीति किं ? राजत्व । भप्रदेशा "भस्य" इत्याद्य ।

+मनुर्नभोऽगिरो वति ॥ १२१ ॥ एते भस ज्ञका भवंति वति से । मनुष्वत् । नभस्वत् । अंगिरस्वत् ।

×वृष्णोऽश्वसौ ॥ १२२ ॥ वृषन् इत्येतद् भसंज्ञ भवत्यश्वे वसौ च । वृषणश्व । वृषण्वसु ।

मत्वर्थे स्तौ ॥ १२३ ॥ सकारांत तकारांत च शब्दरूपं भसज्ञ भवति मत्वर्थे से परत । तप-स्वी । मरुत्वान् । विदुष्मान् । मत्वर्थ इति किं ? पयोभ्यां । विद्वद्भ्यां ।

ध्यपाये ध्रुवमपादानं ॥ १२४ ॥ धिय बुद्धेरपाये प्रातिपूर्वकविश्लेषेन विभागेऽविवक्षितमव-धिभूतं वा यत् ध्रुव तदपादानसज्ञ भवति । ग्रामा-दागच्छति देवदत्त । अधर्माज्जुगुप्सते । अश्वात् धावत पतित । भपा निर्देश किं ? धनुषा विध्य ति । कंसपात्र्यां भुंक्ते । धनुर्विध्यति । अपादान-प्रदेशा 'काऽपादाने' इत्येवमादय ।

+आख्यातोपयोगे ॥ १२५ ॥ उपयोगे नि यमपूर्वकविद्याग्रहणे आख्याता प्रतिपादयिता अपा दान भवति । उपाध्यायादधीते । उपयोग इति किं ? नटस्य शृणोति ।

कर्मणोपेय संप्रदानं ॥ १२६ ॥ कर्मणा य उपेयोऽर्थ स संप्रदानसज्ञो भवति । उपाध्यायस्य गां ददाति । देवाय बलिं प्रयच्छति । राज्ञ दंड वितरति।

+श्लाघह्नुङ्स्थाशपां ज्ञीप्स्य ॥ १२७ ॥ एषां ज्ञीप्सोऽर्थ सप्रदान स्यात् । देवदत्ताय श्लाघते देवदत्तायापह्नुते । तिष्ठते ब्राह्मणी छात्रेभ्य । देवद त्ताय शपते ।

+रुच्यर्थानां प्रेय ॥ १२८ ॥ रुच्यर्थानां धूनां प्रयोगे प्रेय प्रीयमाणोऽर्थ संप्रदान भवति । तुभ्य रोचते मोदक । मह्यं स्वदते दधि ।

धारेरुत्तमर्ण ॥ १२९ ॥ धारयतेरुत्तमर्णो

¹ । पूर्वं ने धिवे नियमार्थमुपयोग एव यथा स्यात् ।

देवदत्तन वा। ग्रिम्यति स, सम्नयति त तन वा। उत्तरत्र विप्रहणात् इहाविवक्षितकर्मणा ग्रहण।

*गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ॥ १४७ ॥ ज्ञाप्यानां गम्यानामथपानां शब्दार्थानां चाप्यतानां य कर्ता स णौ सति कममज्ञा भवति। जानाति धर्म दत्त । ज्ञापयति धर्म देवदत्त। बुध्यते दत्त । बोधय(ति)त्त। गच्छति माणवका ग्राम। गमयति माणवक ग्राम। याति माणवक। यापयति माणवक। भुंक्त देवदत्त। भोजयति देवदत्त। अश्नाति भक्त देवदत्त। आशयति देवदत्तमोदनं। पश्यति देवदत्ता रूप। दर्शयति देवदत्तं रूपं। शेते शिशु। शाययति शिशुं। आस्ते यज्ञदत्त। आसयति यज्ञदत्तं। ज्ञानीनामिति किं? भक्षयति काष्ठ अन्येन।

*शब्दे ॥ १४८ ॥ शब्द वर्तमानस्याण्यन्तस्य यो कर्ता णौ सति कर्म भवति। शृणाति दत्त शब्दं। श्रावयति दत्तं शब्दं। जल्पति देवदत्त पुत्र। जल्पयति देवदत्त पुत्र।

+भक्षहिंसायां ॥ १४९ ॥ भक्षार्हिंसार्थस्याणि कर्ता णौ सति कर्म भवति। भक्षयंति बलीवर्दा सस्य। भक्षयति बलीवर्दान् सस्य। हिंसायामिति किं? भक्षयति पिंडी देवदत्तेन।

+वहे प्रवेय ॥ १५० ॥ वहरणि कर्ता प्रवेयो णौ सति कर्म भवति। वाहयति बलीवर्दान् भारं। प्रवेय इति किं? वाहयति भारं वाहीकेन। नहि बलीवर्दवद् वाहीक प्राजति।

+न खादादिक्रन्दशब्दायह ॥ १५१ ॥ एष्वाऽणि कर्ता णौ सति कर्म न भवति। खादयति आदयति पिंडी देवदत्तेन। क्रन्दयति शब्दापयति ह्वाययति देवदत्तेन। खादादयर्थत्वात् परेषां शब्दक्रियत्वात् प्राप्ति।

*हृकोर्वा ॥ १५२ ॥ हृकोरणि कर्ता णौ सति वा कर्म भवति। हरति भारं दत्त। हारयति भार दत्त दत्तन वा। विकुर्वते सैन्धवा। विकारयति सैन्धवान् सैन्धवैः।

+दृश्यभिवाद्योः ॥ १५३ ॥ दृशोरभिवादे चाणि कर्ता णौ सति कर्म वा भवति। दर्शयन्ति। पश्यति राजान भृत्या। दर्शयत राजान भृत्यान् भृत्यै वा। अभिवादयति गुरुर्दत्त। अभिवादयते गुरु गुरुणा वा दत्तं।

स्वतन्त्र कर्ता ॥ १५४ ॥ स्वतन्त्र आत्मप्रधान कर्तृसंज्ञ भवति। गौस्तिष्ठति। दत्तेन कृतं। देवदत्तेन भुक्तं।

तत्प्रयोजको हेतु ॥ १५५ ॥ तस्य स्वतन्त्रस्य योजक प्रेरका य स हेतुसंज्ञ भवति। भुञ्जानं प्रयोजयति भोजयति। कारयति।

नि ॥ १५६ ॥ आ''प्राग्रीश्वरे''ये वक्ष्यते ते निसंज्ञा भवति। इत्यधिकारा ज्ञेय। निप्रदेशा 'न्यजनाद्' प्रमृत्य।

*चादयोऽसत्त्वे ॥ १५७ ॥ चाद्या निसंज्ञा भवन्त्यसत्त्व वर्तमाना। च वा ह अह एवमादि। असत्त्व इति किं? अन्यापत्य इ।

प्रादि ॥ १५८ ॥ प्राद्या निसंज्ञा सर्वेऽसत्त्वे। प्रपरापसमन्ववनिर्दुर्व्याङ् न्यधयोऽप्यतिसूदभयश्च। पतिना सह उच्चरितव्या पर्युपयोरपि लक्षणमत्र॥ असत्त्व इति किं? विं प्रार्थयति विप्र।

क्रियायोगे गि ॥ १५९ ॥ क्रियया वर्येन योग प्राद्या गिसंज्ञका भवति। प्रणमति। परिणमयति। क्रियायोगे इति किं? प्रगता नायका अस्माद्देशात् प्रनायको देश।

ति ॥ १६० ॥ प्राद्यश्चित्संज्ञका भवंति क्रियायोगे। प्रकृत्य। उपस्तुत्य। अभिकृत्य।

*च्व्यर्थोऽजूर्यादिनुकरणं ॥ १६१ ॥ च्व्यर्थ ऊर्यादि अनुकरण च निसंज्ञ भवति क्रियायोग। शुक्लीकृत्य। विभर्जाभूय। पटपटाकृत्य। ऊरीकृत्य। उररीकृत्य। फट्कृत्य। खाट्कृत्य। ऊर्ग्यादीनां च्व्यर्थो न संभवत पृथग्ग्रहणं।

*सेपान्वेऽस्सतत् ॥ १६२ ॥ असमस्तौ तिसंज्ञौ भवत क्षेपान्तरयोरर्थयो। असत्कृत्य। सत्कृत्य। क्षेपादर इति किं? असत्कृत्या गत।

१। योगप्रहणसामर्थ्यात् कर्तृवाधानुकूला प्राग्भवन प्रति निमित्तान्तरत्वात्प्रयोगविशेषयोरपि मितेऽपि भवति प्र.ते क्रियामात्रान्यत्वं च।

* व्याघ्रादिभिरुपमेयोऽतद्योगे ॥ ४७ ॥ एते सहोपमय षसो भवति तस्य सामान्यस्यायोगे। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः। पुरुषसिंहः। पुरुषर्षभः। अतद्योग इति किं? पुरुषोऽयं व्याघ्र इव शूरः।

विशेषणं विशेष्येणेति ॥ ४८ ॥ विशेषणवाचि सुबन्तं विशेष्येण सह षसो भवत्येकार्थ्ये षष्ठ। नीलोत्पलं। छर्दितशाटी। कृष्णसर्पः। लोहितशालिः। गौरसर्षपः। कृष्णकम्बलः। विशेषणमिति किं? तक्षकः सर्पः। विशेष्येणेति किं? लोहितस्तक्षकः। इतिशब्दो लौकिकविवक्षार्थः। रामो जामदग्न्यः। अर्जुनः कार्तवीर्यः। वाक्यमेव।

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराः ॥ ४९ ॥ एतान्येव समस्यन्ते सुबन्तैः षसो भवति यथ सहैकार्थ्ये। पूर्वपुरुषः। अपरपुरुषः। अपरकायः। प्रथमपुरुषः। चरमपुरुषः। जघन्यपुरुषः। समानपुरुषः। मध्यपुरुषः। मध्यमपुरुषः। वीरपुरुषः।

* श्रेण्यादिः कृतादिभिः च्व्यौ ॥ ५० ॥ श्रेण्यादयः समस्यन्ते कृतादिभिः सह च्व्यर्थे गम्यमाने। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः। श्रेणिमताः। पूगकृताः। पूगमताः। ऊककृताः। ऊकमताः। च्व्यावित्ति किं? श्रेणयः कृताः।

* विसमासौ च ॥ ५१ ॥ विसमासो ईयन् निष्पत्तौ क्तान्त समस्यते अथान्तक्तेन। कृतं चाकृतं च कृताकृतं। भुक्ताभुक्तं। पीतापीतं। पीतविपीतं। कृतापकृतं। छिन्नाछिन्नं। पूतापूतं। विसमासाविति किं? सिद्धं चाभुक्तं च।

+ नानिट् ॥ ५२ ॥ सेट् क्तान्तमनिटा क्तेन सह षसो न भवति। छिन्नाछिन्नं। पवितापूतमित्ति न भवति।

सन्महत्परमोत्तमोत्कृष्टं पूज्येन ॥ ५३ ॥ एते पूज्येन सह समस्यन्ते एकार्थ्ये। संज्ञासा पुरुषश्च सत्पुरुषः। महापुरुषः। परमपुरुषः। उत्तमपुरुषः। उत्कृष्टपुरुषः। पूज्येनेति किं? उत्कृष्टा गौः कर्दमात्।

वृन्दारकनागकुञ्जरैः ॥ ५४ ॥ तत् पूज्यं वृन्दारकादिभिः सह षसो भवति। गौ श्चासौ वृन्दारकश्च गोवृन्दारकः। गोनागः। अश्वनागः। गोकुञ्जरः। मुनिकुञ्जरः। त दिति किं? सुसीमा नागः।

* कतरकतमौ जातिप्रश्ने ॥ ५५ ॥ कतरकतमौ एकार्थौ जातिप्रश्ने गम्यमाने षसो भवति। कतरगार्ग्यः। कतमगार्ग्यः। जातिप्रश्ने इति किं? कतरो भवतोर्देवदत्तः।

क्षेपे किं ॥ ५६ ॥ किमेतत् सुबन्तेन सह समस्यते क्षेपेऽर्थे। स किंराजा यो न रक्षति प्रजाः। स किंसखा यो मित्र द्रुह्यति। स किंवैयाकरणो यः शब्दं न ब्रूयात्। क्षेपे इति किं? को राजा मान्यखेटे।

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ५७ ॥ पोटादिभिः सह जातिवाची शब्दः समस्यते। इभ्या चासौ पोटा च इभ्यपोटा। अग्नियुवतिः। अग्निस्तोकं। घृतकतिपयं। गोगृष्टिः। गोधेनुः। गोवशा। गोवेहत्। गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्तः। जातिरिति किं? देवदत्ता पोटा।

चतुष्पाद्गर्भिण्या ॥ ५८ ॥ चतुष्पाद् जातिः गर्भिणीशब्देन सह षसो भवति। गोगर्भिणी। अजगर्भिणी। चतुष्पादिति किं? ब्राह्मणी गर्भिणी। जातिरित्येव—स्वस्तिमती गर्भिणी।

प्रशंसोक्त्या ॥ ५९ ॥ प्रशंसावचनेन सह जातिः समस्यते। गोप्रकाण्डं। गोमतल्लिका। अश्वप्रकाण्डं। अश्वमतल्लिका। गोमचर्चिका। अश्वमचर्चिका।

युवा खलतिपलितजरद्वलिनैः ॥ ६० ॥ खलत्यादिभिः सह युवा समस्यते। युवखलतिः। युवपलितः। युवजरन्। युववलिनः। युवतिः खलतिः युवखलतिः। युवपलिता। युवजरती। युववलिना।

कृत्यतुल्याख्या अजात्या ॥ ६१ ॥ कृत्यास्तुल्याख्याश्च अजात्या सह षसो भवति। भोज्यं च तदुष्णं च भोज्योष्णं। पानीयशीतं। हरणीयचूर्णो घट। तुल्यश्वेतः। तुल्यरोहितः। तुल्यमहान्। सदृक्श्वेतः। सदृशश्वेतः। अजात्येति किं? भोज्य ओदनः। तुल्यो वैश्यः।

+कुमारः श्रमणादिना ॥ ६२ ॥ कुमार शब्दः श्रमणादिभिः सह षष्ठी समस्यकाश्रय । कुमारी दासी श्रमणा च कुमारश्रमणा । कुमार प्रव्रजिता । कुमारतापसी । कुमाराध्यापक । कुमाराध्यापिका ।

मयूरव्यंसकादयश्च ॥ ६३ ॥ मयूरव्यंसका-दयः शब्दाः षष्ठ्याः गणपाठादेव निपात्यन्ते । विगतौ विशुभौ अंसावस्य व्यंसो व्यंस इव व्यंसकः । व्यंसको मयूरः मयूरव्यंसकः । छात्रव्यंसकः । कम्बोजमुण्डः । यवनमुण्डः । चकारोऽवधारणार्थस्तेन मयूरव्यंसकादय एव समस्यते । अन्यैः सह पूर्ववत् न लभते । परमो मयूरव्यंसकः ।

कालाः मेये ॥ ६४ ॥ कालवाचिनः शब्दा मेये परिच्छेद्ये सह षष्ठी भवति । मासो जातस्य मासजातः । संवत्सरजातः । द्व्यहजातः ।

नञ् ॥ ६५ ॥ नञ् सुपा सह समस्यते । अगौः । अनेकः । अधर्मः ।

+वर्णो वर्णेः ॥ ६६ ॥ वर्णवाचि वर्णवाचि-भिः सह षष्ठी भवति । शुक्लश्चासौ कृष्णश्च शुक्ल-कृष्णः । रोहितशाङ्गः । कृष्णसारङ्गः । विशेषणविशे-ष्यभावो नास्तीति वचनं । शुक्लकृष्णादयश्चार्थानाम न्योन्यस्य विशेषणसमुच्चये वर्तमानस्य शुक्लादेरेव ग्रहणं विशेषणमिष्टनियमेन पूर्वनिपातः प्रयोजनं ।

+पूर्वापराधरोत्तरमभिन्नेनांशिना ॥ ६७ ॥ पूर्वादीन्यंशवाचीन्यंशवाचिना भाममानं षं भव ति । पूर्व कायस्य पूर्वकायः । अपरकायः । अधर कायः । उत्तरकायः । पूर्वादीति किं ? दक्षिणं का-यस्य । अभिन्नेनेति किं ? पूर्व छात्राणां । अंशिने-ति किं ? पूर्व नाभेः कायस्य ।

+अर्द्धं नप ॥ ६८ ॥ अर्द्ध नपुंसके समस्यते अंशिना सह । अर्द्ध पिप्पल्याः—अर्द्धपिप्पली । अर्द्ध खट्वा । नपिति किं ? मामोऽर्द्धो देशः ।

+द्वित्रिचतुर्थं वा ॥ ६९ ॥ एभ्यो शब्द तदंतं अंशिना वा षष्ठी समासमिश्रेण । द्वितीयं भिक्षा-याः द्वितीयभिक्षा । भिक्षाद्वितीयं । तृतीयभिक्षा । भिक्षातृतीयं । चतुर्थभिक्षा । भिक्षाचतुर्थं । प्राप्यं-ति किं ? पञ्चम भिक्षायाः ।

ता ॥ ७० ॥ तान्त सुबंतेन सह षष्ठी भवति । स्वगमुखं । मोक्षमार्गः । राजपुरुषः ।

कृति ॥ ७१ ॥ कर्मणि या ता तदंतं सुपा समस्यते । इध्मानां प्रवचनं इध्मप्रवचनं । पलाशशा-तनं । काष्ठिच्छेदनं । स्माश्रुकर्तनं ।

याजकादिभिः ॥ ७२ ॥ एतैः सह तां षष्ठी भवति । देवानां याजकः देवयाजकः । ब्राह्मण मामपूजकः । गुरुपरिचारकः । गुरुपरिवेषकः । तपो-वकः । अर्थवाचकः ।

+पत्तिरथं गणक ॥ ७३ ॥ पत्तिरथशब्दौ तांती गणकेन सह समस्येते । पत्तीनां गणकः पत्ति-गणकः । रथगणकः । पत्तिरथमिति किं ? कर्णा-पणानां गणकः ।

न प्रतिपदं ॥ ७४ ॥ प्रतिपदं या ता तदंतं न समस्यते । फलानां तृप्तः । सर्पिषो ज्ञानं । मधुनः यत्नं ।

निर्द्धारणे ॥ ७५ ॥ निर्धारणे जातिगुणक्रि याभिः समुदायादेकदेशस्य निष्कृष्य पृथक् करणे या ता तदंतं न समस्यते । मनुष्याणां क्षत्रियः शूरतमः । नारीणां श्यामा दर्शनीयतमा । अध्वगानां धावंतः शीघ्रतमाः । गवां कृष्णाः संपन्नक्षीरतमाः ।

+पूरणाव्ययसत्तैकार्थ्यैः ॥ ७६ ॥ एतैः सह तांतं षष्ठी न भवति । चक्रवराणां पंचमः । तीर्थकृतां षोडशः । चक्रदेवानां नवमः । ग्रामस्य पुरस्तात् । वृक्षस्योपरि । देवदत्तस्य कुर्वन् । देवदत्तस्य कुर्वाणः । देवदत्तस्य कर्तव्यं । आचार्यस्य सौदत्तस्य । शुकस्य मारामिदस्य ।

+गुणैस्तस्थैर्विसरणादिभिः ॥ ७७ ॥ अवस्थैर्गुणैस्तांत न समस्यते विसरणादिभिरिति । काकस्य कार्ष्ण्यं । बलाकया शौक्ल्यं । कटकस्य तैक्ष्ण्यं । नात्र कार्ष्ण्यादिर्गुणस्य काकस्य प्रतीयते । कृष्णः काक इति यथा । गुणैरिति किं ? राजपु-रुषः । अतस्थैरिति किं ? कन्याकर्णः । कपित्थरसः । चंदनगंधः । सलसपर्शः । अविसरणादिभिरिति किं ? गोविंशतिः । गोशतं । सुवर्णाधा । वचनप्रामाण्यं ।

एवं-दन्तजात । स्मश्रुजात । घृतपीत । मासमौकेट । मधुगत । शीर्णोत्सिम ।

+प्रिय ॥ १२१ ॥ प्रियो वा बसे पूर्व प्रयोक्तव्य । प्रियगुड । गुडप्रिय ।

+गड्वादय ईप ॥ १२२ ॥ ईबन्तात् गडु प्रभृतयो बसे वा पूर्व प्रयोक्तव्याः । गडुकण्ठः । कण्ठगडु । गडुशिरा । शिरागडु ।

+क्तान्तार्थ ॥ १२३ ॥ बसे सप्तम्यन्तात्क्तान्ताच्चापि पूर्वं वा प्रयोक्तव्यं । उपततोऽसिरनेन-अस्युपत । उद्यतासि । खड्गोद्गीर्ण । खड्गोद्गीर्ण । वज्रहस्त । हस्तवज्र । चक्रपाणि । पाणिचक्र । करवाल्कर । करकरवाल । ईप्सितार्थोपार्थ । कराब्द ।

+कालाकृतिसुखादय ॥ १२४ ॥ कालवाचिन आकृतिर्जातिस्तद्वाचिन सुखादयश्च बसे क्तान्तात् वा पूर्वं प्रयोक्तव्या । मासयाता । यातमासा । क्षीरजग्धी । जग्धक्षीरा । सुखयाता । यातसुखा । दुःखयाता । यातदुःखा ।

क्त ॥ १२५ ॥ क्तान्तं बसे पूर्वं प्रयोक्तव्यं । कृतभिक्ष । व्याप्तपातलाक्ष । भिक्षितभिक्ष । अवमुक्तोपानत्कः । विश्रुतकीर्ति ।

*य कडारादय ॥१२६॥ षसे कडारादयो वा पूर्व प्रयोक्तव्या । कडारमद्र मद्रकडार । गडुलशाण्डिल्य शाण्डिल्यगडुल । बधिरवेध बेधबधिर । कुण्ठपूर्त, पूर्तकुण्ठ । कुट्याधि दाधिकुट्य ।

उत्तरपदं च ॥ १२७ ॥ सं यदुत्तरपद तत् पूर्वम् भवति । दशगवस । व्याघ्रजात । पृष्ठरेखा दिग्गविक सुहृद्यो" इत्यादय ।

इति जैनेन्द्रव्याकरणे शब्दार्णवचन्द्रिकानाम्नि लघुवृत्तौ प्रथमस्याध्यायस्य तृतीय पाद ।

---

अथ प्रथमाध्याये चतुर्थ पाद ।

---

कमणीय ॥ १ ॥ कमणि कमरके इद् विभक्ति भाति । कट करा न । जैनेन्द्र पठति । पायस धुक । भा मा पचति । अरि इषयति ।

+हांवरांवरेणाविधिकृनिकषासमयाभिर्वो पाद्वो ॥ २ ॥ हाभिर्योगे इद् भवत्युपावौ विषयणे । हा देवन्त गर्हते व्याधिः । अतरा गमान्नन्तं अत्रागत चोरता कुरव । अतरा निषध नीलं च विदेहा । अतरेण सौमनस विद्युत्प्रभ च देवकुरव । अतरेण जलधिं हिमवंत च भरत । सौधर्मतरेण मासतिकं सुर्ख । अतिवृद्धं कुरुम्भट्ट इत्र । विदेहमयत्तमयश्च प्रद्युदं । निकषा ग्राम नदी । समया ग्राम वर्त । उपायाविति किं ? प्रथमे व्याख्यादौ मा भूत् । चकारोऽनुक्तसमुच्चयार्थ । तेन—बुभुक्षितं न प्रतिभाति किंचित् । एषोऽध्य भाटे प्रतिभाति यत्कां ।

+पर्यभिसर्वोभयतस्त्यै ॥ ३ ॥ पर्यभिस्त्यस्त्यर्थियोगे इद् भवति । परितो ग्राम वनानि । अभितो ग्राम । सर्वतो ग्राम । उभयतो ग्राम वनानि ।

+द्विरुक्तैरपोभि ॥ ४ ॥ द्विरुक्तैरधोऽध्युपरिभिः ग्रे इद् भवति । अधोऽधो ग्रामं । अध्यधि ग्राम । उपर्युपरि ग्राम ग्रामा । द्विरुक्तैरिति किं ? अधो ग्रामस्य ।

*कालाध्वन्यभेदे ॥ ५ ॥ कालेऽध्वनि चोपाधौ इद् भवत्यभेदेऽर्थसंयोगे प्रम्याग्निना । सवत्सरं क्षीरोदनं । घरं मधुरा रमणीया । क्रोशं रमणीते । क्रोशं सिकता । योजनं पर्वो गिरि । अव्ययमधीते । कालाध्वनीति किं ? स्वास्यां पचति । अभेदे इति किं ? मासे मासस्य वा द्विरधीते ।

सिद्धौ भा ॥ ६ ॥ सिद्धौ क्रियाफलनिष्पत्तौ गम्यमानायां कालाध्वन्यां भा भवत्यभेदे । मासेन प्रामतमधीत । क्रोशेन तर्कमधीतं । सिद्धाविति किं ? मासं काव्यमधीतं न च ज्ञातं ।

क्रियामध्ये केपी ॥ ७ ॥ क्रिययोर्मध्ये कालाध्वन्यां केपी विभक्ती स्त । अद्य भुक्त्वा मुनि द्व्यहाद् भोक्ता द्व्यहे भोक्ता । इहस्थोऽयमिष्वासः क्रोशात् क्रोशे वा विध्यति लक्ष्यं ।

*स्वतौ पूजायां ति ॥ ८ ॥ पूजार्थे स्वतीस्वतौ तिसंज्ञौ स्त । सुसाध्य गत । अतिसिध्य गत । पूजायामिति किं ? सुसिक्त्वा गत । काकुतियं ।

*न गिः ॥ ९ ॥ पूजार्थे स्वतीशब्दो गिसंज्ञो न स्यात् । सुस्थितं भवता । अतिस्तुतं त्वया । गिनिमित्त पत्वं नास्ति । पूजायामिति किं ? अतिषिक्त किं तवात्र । कुत्सार्थोऽत्र ।

*अतिक्रमेऽतिर्गिरिति ॥ १० ॥ अतिक्रमे भाविवयेऽतिर्गिसंज्ञो न भवति । अतिसिक्तमेव भवता । अतिस्तुतमेव त्वया । अतिभिन्नमेव गतः । गिसंज्ञाभावे पत्वं तिसंज्ञाभावे समिविधिश्च नास्ति । अतिक्रम इति किं ? अतिशम्य गतः ।

पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेऽपि ॥ ११ ॥ एतेष्वर्थेष्वपिर्गितिसंज्ञो न भवति । सर्पिषोऽपि स्यात् । बिंदु स्तोकं मात्रा सर्पिषस्तमार्थः । अपिस्तुयाद् राजानं । अपिस्तुहि । धिग्ब्राह्मणमपि स्तुयात् वृषलं । धिग्ब्राह्मणमपि सिंचत् पलाण्डु । अपि सिंच । अपि स्तुहि ।

*अधिपर्यी पर्यपी ॥ १२ ॥ अधिपर्यावनर्थान्तरवाचिनौ पर्यपी गितिसंज्ञौ न भवतः । कुतः पर्यागतः । कुतोऽभिगत्य । पर्यानत । गितिसंज्ञाभावे 'प्राग्धोस्त' इति प्रयोगनियमः समिविधिर्णत्वं च न भवति ।

वीप्सेत्थंभूतलक्षणेऽभिनेप् ॥ १३ ॥ एष्वर्थेष्वभिना योगे इप् भवति गितिनिषेधश्च । वृक्षं वृक्षमभिसिंचति । साधुस्त्व मातरमभिस्थितः । वृक्षमभिसजति ।

भागे चानुप्रतिपरिणा ॥ १४ ॥ भागेऽर्थे वीप्सादिष्वर्थादिभिर्योगे इप् भवति गिसंज्ञानिषेधश्च । यदत्र मामनुस्यात् । मां प्रति स्यात् । मां परि स्यात् तद्दीयतां । वृक्षं वृक्षमनुसिंचति प्रतिसिंचति, परिसिंचति । साधु त्व मातरमनुस्थितः प्रतिस्थितः । वृक्षमनुसजति प्रतिसजति परिसजति । भाग चेति किं ? परिषिंचमानम् ।

*भार्येऽनुना ॥ १५ ॥ भार्ये हेत्वादावनुना योगे इप् भवति । भरतस्य प्रसम्पामनुप्राभजन् राज सहस्राणि । शाकेरुपचितमन्वागमन् सुराः । शांतिमापचरितपाकप्रसारणमनुप्रावर्षत् पर्जन्यः । तेन हेतु मेतमर्थः । नदीमन्वसिता सेना । नद्या सहावसितेत्यर्थः ।

*उत्कृष्टे ॥ १६ ॥ अनुना योगे उत्कृष्टेऽर्थे इप् भवति । अनुपूज्यपादं वैयाकरणाः । अनुसमन्तभद्रं तार्किकाः । अन्वकलंकं शास्त्रारः ।

उपेन ॥ १७ ॥ उपेन योगे उत्कृष्टेऽर्थे इप् भवति । उपसिद्धसेनं कवयः । उपाकलंकं वा ग्मिनः । उपाभिमन्यमतुल्याः । उपार्जुनं धन्वारः ।

*ईप साधिके ॥ १८ ॥ उपेन योगे साधिकेऽर्थे ईप् भवति । उपखार्यां द्रोणः ।

*स्वेधेऽधिना ॥ १९ ॥ स्वे ईशितव्ये ईश्वरे च ईप् भवत्यधिना योगे । स्वे—अधिकुरुषु श्रेणिकः । अधिमगधेषु श्रेणिकः । अधिमगधेश्वरे कुरवः । अधिश्रेणिके मगधाः ।

*आङाभिविधिमर्यादे ॥ २० ॥ आङा योगे का विभक्तिर्भवत्यभिविधिमर्यादयोः । आकुमारेभ्यो यशः समंतभद्रस्य । आपाटलिपुत्राद् वृष्टो देवः ।

अवर्ज्येऽपपरिभ्यां ॥ २१ ॥ वर्ज्येऽर्थेऽपपरिभ्यां योगे का भवति । अपत्रिगर्त्तेभ्यो वृष्टो देवः । परित्रिगर्त्तेभ्यो वृष्टो देवः । परिपरित्रिगर्त्तेभ्यो वृष्टो देवः । वर्ज्ये इति किं ? अपशब्दो देवदत्तस्य ।

*प्रतिनिधिप्रतिदाने प्रतिना ॥ २२ ॥ प्रतिनिधिः प्रतिदानं यत्र प्रतिमा प्रतिनिधिः सादृश्यं तत्र प्रतिना योगे का भवति न गितिसंज्ञा च । माषान्स्मै तिलेभ्यः प्रतियच्छति । अर्ककीर्त्तिर्भरतात् प्रति ।

*चेष्टागतिकर्मण्यप्राप्तेऽपीपी ॥ २३ ॥ चेष्टाक्रिया गतेः कर्मण्यप्राप्तेऽर्थेऽपीपी विभक्ती स्तः । ग्रामाय गच्छति । ग्रामं गच्छति । नगराय व्रजति । नगरं व्रजति । चेष्टागतिकर्मणीति किं ? ग्रामादागच्छति । चेष्टाग्रहणं किं ? मनसा मेरुं गच्छति । गतिग्रहणं किं ? पचत्योदनं । अप्राप्त इति किं ? स्त्रियं गच्छति ।

संप्रदानेऽप् ॥ २४ ॥ संप्रदाने कारकेऽप् विभक्तिर्भवति । वज्रजंघाय श्रीमतीमदात् । त्रिपृष्ठाय स्वयंप्रभामदात् । श्रीविजयाय सुतारामदात् । अमोघजिह्वाय मामसतमदात् । देवाय बलिं प्रयच्छति ।

*तादर्थ्ये ॥ २५ ॥ तादर्थ्ये अप् भवति । अवहननायोलूखलं । रंधनाय स्थाली ।

+मत्स्यर्थैर्विकारे ॥ २६ ॥ भक्ष्यार्थैर्युक्तेभ्यो विकारेऽर्थेऽप् भवति । मूत्राय प्रकल्पते यवागूः । श्लेष्मणे जायते दधि । तत्तदाम्नादिविकारत्वमापद्यते इत्यर्थः । विकार इति किं ? मुक्तिने संपद्यते ज्ञानम् ।

+ज्ञाप्येऽरिष्टेन ॥ २७ ॥ अरिष्टेन उत्पातेन ज्ञाप्येऽर्थे ज्ञाप्यमाने अप् भवति ।

वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥

अरिष्टेनेति किं ? मित्रस्येदं छत्रं ।

•पर्यवसायोऽर्थात् कर्मणि ॥ २८ ॥ अर्थो भाग यस्य तस्य यो कर्मण्यप् भवति तद् अर्थ-भागार्थात् न साक्षात् प्रयुक्तः । एधेभ्यो व्रजति । पुष्पेभ्यो व्रजति । पाशाय व्रजति । फलेभ्यो व्रजति । पर्यवसाय इति किं ? प्रविश पिंडी । अर्थादिति किं ? एधानाहर्तुं व्रजति ।

•पक्षार्थनमःस्वस्तिस्वाहास्वधावषट्स्वधाभिर्वै ॥२९॥ पक्षार्थैर्नमःप्रभृतिभिश्च योगे अप् भवति । पंक्ता जिनदत्तो देवदत्ताय । पञ्च मल्लो मल्लाय । नमोऽभिनंदनदेवाय । स्वस्ति प्रजाभ्यः । इन्द्राय स्वाहा । वरुणाय । स्वधा पितृभ्यः । वामपाणिमे हितं ।

मगर्हे मन्यकर्मण्यप्राणीवे वा ॥ ३० ॥ मन्य-तेर्य गर्हे गम्यमाने मन्यतेः कर्मणि अप्राणिनि वा अप् भवति । न त्वा तृणाय मन्ये । न त्वा तृणं मन्ये । न त्वा श्लेष्माय मन्ये । न त्वा श्लेष्मं मन्ये । प्राणिनि किं ? काष्ठं त्वां मन्ये । गर्हे इति किं ? इन्द्रनीलमत् पद्मरागमभिरूपं मन्ये । मन्ये ग्रहण किं ? न त्वा तृणं चिंतयामि । अप्राणीवे इति किं ? न त्वा श्वानं मन्ये ।

संज्ञो वा दे ॥ ३१ ॥ संपूर्वस्य जानातेः कर्मणि वा या विभक्तिर्भवति दे । मातुः संजानीते । मातरं संजानीते ।

•कर्तृकरणे ॥ ३२ ॥ कर्तरि करणे च कारके भा भवति । देवदत्तेन कृतं । जिनदत्तेन भुक्तं । विष्णुमित्रेण पीतं । दात्रेण लुनाति परशुना छिनत्ति । ध्यानेन कर्माणि हंति ।

+प्रकृत्यादिभ्यः ॥ ३३ ॥ एभ्यो भा भवति । प्रकृत्या अभिरूपः । प्रायेण वैयाकरणः । गोत्रेणा-स्मि गोत्रेण । समेन धावति । विषमेण धावति । द्विद्रोणेन धान्यं क्रीणाति । सहस्रेण पशून् क्रीणाति ।

सहार्थेन ॥ ३४ ॥ सहार्थेन योगे भा भव-त्यप्राणी । वत्सेन सह गौः । पुत्रेण सहागतः । पुत्रेण सह स्थूलः । पुत्रेण सह धनवान् । सर्व-प्रार्णे पर्यन्मार्थे । पुत्रेण सार्धं साकं सत्रा सम युगपत् समं । पुत्रेण युक्त—करणमिर्देशः ।

येनाङ्गविकारस्तद्भावो ॥ ३५ ॥ यदाश्री-तो विकारो विकृतमित्यर्थस्तोऽनेन प्रकारेण लक्ष-स्य लक्ष्यते तद्रीं भा भवति । पाणिना कुणिः । पादेन खञ्जः । अक्ष्णा काणः ।

शिरसा मधुभाराधीत् श्वेतच्छत्रेण भूपतिं ।
केशवं शंखचक्राभ्यां त्रिभिर्नेत्रैः पिनाकिनम् ॥

अपि भवान् कमण्डलुना छात्रमद्राक्षीत् । अपि भवान् सूत्रमा परिव्राजकमद्राक्षीत् । छात्रत्वादिप्रका-रमापन्नो मनुष्यः कमण्डल्वादिना लक्ष्यते । "अंगवि-कारस्तद्भावो" इति किं ? अक्षि काणमस्य ।

हेतौ ॥ ३६ ॥ हेत्वर्थे भा भवति । धनेन कुलं । विद्यया यशः । अन्नेन वसति । अध्ययनेन वसति ।

+का ॥ ३७ ॥ हेतौ का भवति । शिशिरत्वे-र्घताद् । पर्वतोऽग्निमान् धूमवत्त्वात् ।

•गुणे ॥ ३८ ॥ हेतौ गुणे का भवति । शताद्बद्धः । सहस्राद्बद्धः । निष्काद्बद्धः । हेतौ इति किं ? शतस्त्वमा देवदत्तो मार्ग गमयन शत म प र यति धनेन बद्धः ।

गुणे स्त्रीस्त्रपस्त्यासियां ॥ ३९ ॥ गुणे हे-तौ स्त्रीस्त्र्यपर्यवतेन का भवतमस्त्रियां । जाड्या-द्बद्धः । जाड्येन बद्धः । ज्ञानान्मुक्तः । ज्ञानेन मुक्तः । गुण इति किं ? धनेन कुलं । अस्त्रियामिति किं ? बुद्ध्या मुक्तः ।

•हेतौ सर्वा माय ॥ ४० ॥ हेतुसम्बन्धा-

1 [illegible] । १ १ । [illegible] ।

य प्रकृते हेत्वर्थे तद्योगिन' सर्वा विभक्तय' प्रायेण भवंति । धनेन हेतुना वसति । धनाय हेतवे । धनाद्धेतो । धनस्य हेतो' । धने हेतौ । कं हेतुं वसति । केन हेतुना । किं निमित्तं । केन निमित्तेन । किं कारणं । केन कारणेन । किं प्रयोजनं । केन प्रयोजनेन । यं हेतुं वसति । येन हेतुना । येन निमित्तेन । एवं सर्वत्र ज्ञेयं ।

काऽपादाने ॥ ४१ ॥ अपादाने कारके का विभक्तिर्भवति । रथात् पतित' । आचार्यात्पठीते । चौरेभ्यो बिभेति । अधर्माज्जुगुप्सते । माथुरा' पाटलिपुत्रकेभ्य आढ्यतरा',अभिरूपतरा',दर्शनीयतरा ।

+ल्यप्से कर्माधारे ॥ ४२ ॥ ल्यबन्तस्य च कर्मण्याधारे च का स्यात् । प्रासादात् प्रेक्षते । आसनात् प्रेक्षते । अत एव वचनात् ल्यप् गम्यं । ल्यप् इति किं ? प्रासादमारुह्य प्रेक्षते । आसने उपविश्य प्रेक्षते । कर्माधार इति किं ? गृहादागच्छति ।

•दिग्शब्दान्यार्थाञ्चूत्र्याहीतरारातिर्युक्ते ॥४३॥ दिक्शब्दैरन्यार्थैरञ्चूत्र्याहीतरारातिभिश्च युक्ते का भवति । पूर्वो ग्रामात् । उत्तरो ग्रामात् । अन्यो देवदत्तात् । भिन्नो देवदत्तात् । प्राग् ग्रामात् । प्रत्यग् ग्रामात् । दक्षिणा ग्रामात् । दक्षिणाहि ग्रामात् । इतरोऽस्मात् । गृहादारात् क्षेत्रं । बहिर्ग्रामात् ।

•ताऽस्तोऽर्थैस्तैः ॥४४॥ अतसर्थैस्तैर्योगे ता भवति । दक्षिणतो ग्रामस्य । उत्तरतो ग्रामस्य । उपरि ग्रामस्य । उपरिष्टात् ग्रामस्य । परो ग्रामस्य ।

•इप् एनेन ॥ ४५ ॥ एनेन योगे इप् ता च स्यात् । दक्षिणेन विजयार्द्धं वसति । उत्तरेण हिमवंतं । पूर्वेण ग्रामस्य । उत्तरेण ग्रामस्य ।

•का पर्तेः ॥ ४६ ॥ ऋते शब्देन योगे का स्यात् इप् च । ऋते धर्मात् कुतः सुखं । जिनं यथाश्रयमृते । न धर्मं विजिज्ञासते रोगमृते ।

•टैपृथङ्नाना भा च ॥ ४७ ॥ पृथग्नानाभ्यां योगे भा स्यात् का च । पृथक् देवदत्तेन । पृथग् देवदत्तात् । नाना गुरुदत्तेन । नाना गुरुदत्तात् ।

•बिना तिस' ॥ ४८ ॥ बिना योगे तिसो भावश्च भवति । बिना सम्यक्त्वेन । बिना सम्यक्त्वात् । बिना सम्यक्त्वं कुतो मुक्तिः ।

•स्तोकाल्पकृच्छ्रकतिपयात् करणे का वा ऽसत्त्वे ॥ ४९ ॥ स्तोकादेरसत्त्ववचनात् करणे का वा स्यात् । स्तोकान्मुक्तः । स्तोकेन मुक्तः । अल्पान्मुक्तः । अल्पेन मुक्तः । कृच्छ्रान्मुक्तः । कृच्छ्रेण मुक्तः । कतिपयान्मुक्तः । कतिपयेन मुक्तः । असत्त्वे इति किं ? अल्पेन सीधुना मत्त' । करणे इति किं ? अल्पं जल्पति ।

+तृप्तार्थैस्ता ॥ ५० ॥ तृप्तार्थैस्तृप्तियोगे करणे ता भवति । ओदनस्य तृप्यति । ओदनस्य तृप्त' । सक्तूनां पूर्यते । सक्तूनां पूर्ण' ।

•ज्ञोऽज्ञानार्थे ॥ ५१ ॥ जानातेरज्ञानार्थे अनवबोधने वर्तमानस्य करणे ता भवति । सर्पिषो जानीते । दध्नो जानीते । अज्ञानार्थे इति किं ? ज्ञानेन दुरितं जानाति ।

•का पाराद्यैः ॥५२॥ आराद्यैर्दूरार्थैरन्तिकार्थैश्चासत्त्ववाचिभिर्युक्ते का स्यात् ता च । दूरं ग्रामात् । दूरं ग्रामस्य । विप्रकृष्टं पर्वतात् । विप्रकृष्टं पर्वतस्य । अन्तिकं वनात् । अन्तिकं वनस्य । अभ्याशं देशात् । अभ्याशं देशस्य ।

•तेभ्य' केभ्या' ॥ ५३ ॥ तेभ्य आराद्यैभ्यः केभ्या भवति । दूराद् ग्रामस्य । दूरं ग्रामस्य । दूरेण ग्रामस्य याति । अन्तिकात् ग्रामस्य । अन्तिकं ग्रामस्य । अन्तिकेन ग्रामात् ।

•ईबाधारे च ॥ ५४ ॥ ईप् विभक्ति भवति आधारे कारके तेभ्यश्च ।

अपाङ्गे रमते लोकः गिरौ वर्षति वासवः ।
अन्यत्रापि मनो याति कुलस्त्रीषु न गच्छति ॥

१ अस्मद्युष्मदर्थ स्थिति का प्रयोगे [illegible] देवभक्तिरपि पूर्वविधिर्भवति वा भवति । २ अतोऽत्र विभुर्वर्ज [illegible] । [illegible]

१ [illegible] अर्थे च । [illegible] ।

कट आस्ते। स्थाल्यां पचति। गङ्गायां घोषः। दूरे वनस्य। विप्रकृष्टं ग्रामस्य। अन्तिके कूपस्य। समीपे देवस्य।

+क्तेनकर्मणि ॥ ५५ ॥ क्तान्तस्य इन्विषयस्य कर्मणीप् भवति। अधीती व्याकरणमनेन—अधीती व्याकरणे। आम्नाती छन्दसि। अर्पिती गुरौ। कर्मग्रहणं किं? भुक्तपूर्वी ओदनं। इन्ग्रहणं किं? गुरुमुपश्लिष्टः शिष्यः।

+हेतौ तद्युक्ते ॥ ५६ ॥ कर्मणा युक्ते हेतौ ईप् भवति।

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरं।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

तद्युक्त इति किं? भिक्षया वसति।

यद्भावाद्भावगतिः ॥ ५७ ॥ यस्य भावात् क्रियातो भावान्तरस्य गतिर्निर्णीतिस्तत्र ईप् भवति। गोषु दुह्यमानासु गतः। दुग्धास्वागतः। देवार्चायां क्रियमाणायां गतः कृतायामागतः। यद्भावादिति किं? यो जटाभिः स भुक्तः। जटाभिरित्यत्रैव नास्ति भव्यत्वात्। भावगतिरिति किं? यो भुक्तवान् स देवदत्तः। यो भुक्तवानित्यत्रैव न भवति।

गते स्थानिन्यध्वान्तेनैकत्व ॥ ५८ ॥ यस्य प्रयोगेऽप्यर्थो गम्यते स स्थानी। इयत्तावच्छिन्नस्याध्वनोऽवसानमन्तः। यद्भावाद् भावगतिस्तस्मिन् युक्तस्याध्वनः गतशब्दे स्थानिन्यप्रयुज्यमाने तेनान्तेन एकत्व [प्रथमान्त] भवति। पाटलिपुत्राद् राजगृहं सप्त योजनानि। स्थानिनीति किं? गवीधुमतः सांकाश्यं चतुर्षु योजनेषु गतेषु भवति। अध्वग्रहणं किं? कार्तिक्या आग्रहायणी मासे। अन्तेनेति किं? अद्य नवसु चतुर्षु योजनेषु गतेषु भोजनम्। चकार ईब्बाधनार्थः।

ता चानादरे ॥ ५९ ॥ यद्भावाद् भावगतिस्तत्र ता भवतीप् चानादरे गम्यमाने। रुदतो लोकस्य प्राव्राजीत्। रुदति लोके प्राव्राजीत्। देवदत्ते क्रोशति प्राव्राजीत्। देवदत्तस्य क्रोशतः प्राव्राजीत्।

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्र सूतैश्च ॥ ६० ॥ एतैर्योगे तेपी स्तः। गवां स्वामी। गोषु स्वामी। पतीनामीश्वरः पतिष्वीश्वरः। भुवामधिपतिः। भूम्यधिपतिः। धनस्य दायादः। धने दायादः। गवां साक्षी। गोषु साक्षी। शतस्य प्रतिभूः। शते प्रतिभूः। गवां प्रसूतः। गोषु प्रसूतः।

कुशलायुक्तेनासेवायां ॥ ६१ ॥ कुशलायुक्ताभ्यां योगे तेपी स्तः। मुहुर्मुहुरावर्त्येन वा सेवायां गम्यमानायां। कुशलो विद्याग्रहणस्य। कुशलो विद्याग्रहणे। आयुक्तस्तपश्चरणे। आयुक्तस्तपश्चरणस्य। आसेवायामिति किं? कुशलोऽत्र कर्मणि न च करोति। आयुक्तो गौः शकटेन। आकृष्य युक्त इत्यर्थः।

•साधुनिपुणेनानभ्यादिनार्चायामीप् ॥ ६२॥ साधुनिपुणाभ्यां योगे अभिप्रत्यादिभिरयोगे चार्चायां गम्यमानायां ईप् स्यात्। जिने साधुः। गुरौ निपुणः। अर्चायामिति किं? साधुरभृत्यो राज्ञः। अनभ्यादिनेति किं? साधुर्मातरमभि। मातरमनु। पितरमनु। निपुणो मातरं प्रति। मातरं परि। निपुणः पितरं प्रति। पितरं परि।

•प्रसितोत्सुकावबद्धैर्भा च ॥ ६३ ॥ एतैर्योगे भा स्यादीप् च भवति। केशैः प्रसितः। केशेषु प्रसितः। केशैरुत्सुकः। केशेषूत्सुकः। केशैरवबद्धः। तत्र नित्य प्रसक्तिरित्यर्थः।

ऋक्षे भे ॥ ६४ ॥ ऋक्षे भे विषये भेपौ स्तः। पुष्येण पुष्ये वा पायसमश्नीयात्। मघाभिर्मघासु वा पललौदनम्। ऋक्ष इति किं? पुष्ये चन्द्रमाः। भ इति किं? पञ्चालेषु वसति।

मृदेकार्थे वा ॥ ६५ ॥ मृदः सहैकार्थे समानार्थे वर्तमानात् स्वाभ्यामादि वा (प्रथमा) विभक्ति भवति। मुनिर्मृतः। द्रोणः पच्यते। गाः। कुमारी। वृक्षः। कुण्डं। नारी। एकः। द्वौ। बहवः। एकार्थे इति किं? त्वया पच्यते ओदनः।

संबोधने चाम्यं ॥ ६६ ॥ संबोधने या वा तस्या आम्यमिति संज्ञा भवति। हे देव। हे देवौ। हे देवाः।

•सः किः ॥ ६७ ॥ आम्यसंज्ञाया वाया सु

किसखो भवति । हे कन्ये । हे कुमारि । हे वधु । क्विप्देशाः केचि" प्रभवन्ति ।

ता शेषे ॥ ६८ ॥ कारकाणामविवक्षा ततो-ऽन्यः स्वस्वाम्यादिर्वा शेषस्तस्मिन् ता विभक्ती भवति । भटस्य शृणोति । राज्ञः स्वं । भत्राणां राजा । तस्य भ्राता । ग्रामस्य समीपं । धार्तीनां राशिः । यवानां धाना । तस्य हस्तः । गोः स्वामी ।

स्मर्यर्थदयेशां कर्मणि ॥ ६९ ॥ स्मृत्यर्थानां दयेशोश्च कर्मणि ता स्यात् । मातुः स्मरति । पितुर ध्येति । सर्पिषो दयते । पयस ईष्टे । शेष इति किं ? मातरं स्मरति ।

कृञः प्रतियत्ने ॥ ७० ॥ कृञः कर्मणि ता स्यात् प्रतियत्नेऽर्थे । एधो दकस्योपस्कुरुते । शतप-त्रस्योपस्कुरुते । प्रतियत्न इति किं ? कुम्भं करो-ति मृदया ।

* रुजर्थस्याज्वरिसंताप्योर्भावके ॥ ७१ ॥ रुजर्थानां भाववाचिनां भूतां कर्मणि ता स्यात् ज्वरि संतापी विहाय । चौरस्य रुजति रोगः । वृषलस्या-मयति रुजा । रुजर्थस्येति किं ? एति जीवंतमानन्दः । अज्वरिसंताप्योरिति किं ? अपथ्याशिनं ज्वरयति ज्वरः । अमाशिनं संतापयति पीडा । भावोक्ताविति किं ? मधुराशिनं रुजति श्लेष्मा ।

आशिषि नाथः ॥ ७२ ॥ नाथतेः कर्मणि ता भवत्याशिषि । पयसो नाथते । दध्नो नाथते । आशिषीत्येव । माणवकमुपनाथयति । अंग पुत्राधी-ध्येति यावत् इत्यर्थः ।

* जासनाटक्राथपिषो हिंसायां ॥ ७३ ॥ जासादीनां हिंसार्थानां कर्मणि शेषे ता भवति । चौरस्योज्जासयति । दस्योर्नाटयति । कितवस्योत्क्रा-थयति । चौरस्य पिनष्टि । हिंसायामिति किं ? चौरं बन्धनाद्दुज्जासयति । धाना पिनष्टि ।

* नाथेर्घ्रः ॥ ७४ ॥ मनिभ्यां व्यस्तसमस्तवि-पर्यस्ताभ्यां हृते कर्मणि ता स्यात् हिंसार्थे । चौरस्य प्रहरति । वृषलस्य निहरति । प्रणिहरति । निप्रहरति ।

व्यवहृपणो सामर्थ्ये ॥ ७५ ॥ एतयो सामर्थ्ये क्रयविक्रये प्रोते च कर्मणि ता भवति । शतस्य व्यवहरते । सहस्रस्य व्यवहरते । शतस्य पणते । सहस्रस्य पणते । सामर्थ्य इति किं ? शलाकां व्यवहरति ।

दिवः ॥ ७६ ॥ व्यवहृपणिसमानार्थस्य दिवे कर्मणि ता भवति । शतस्य दीव्यति । सहस्रस्य दीव्यति ।

वा गौ ॥ ७७ ॥ गिपूर्वस्य दिवः कर्मणि ता वा भवति । शतस्य प्रतिदीव्यति । शतं प्रतिदीव्यति ।

* कालाधारे सुजर्थे ॥ ७८ ॥ सुजर्थो यस्य तस्मिन् सऽर्थे युक्ते सति काले आधारे कारके ता भवति । द्विरह्नो भुङ्क्ते । त्रिरह्नो भुङ्क्ते । पंचकृत्वोऽह्नो भुङ्क्ते । कृत्वग्रहणं किं ? द्विः कांस्यपात्र्यां भुङ्क्ते । आधार इति किं ? द्विरह्ना भुङ्क्ते । सुजर्थ इति किं ? अह्नि भुङ्क्ते मैत्रः । शेष इति किं ? द्विरहन्यधीते ।

कर्तृकर्मणो कृति ॥ ७९ ॥ कर्तरि कर्मणि च कृत्प्रयोगे ता भवति । भवतां शायिका । भवता-मासिका । यवानां लावकाः । सक्तूनां पायकः । विश्वस्य ज्ञाता । सक्तूनां मन्था । कृतीति किं ? कृतपूर्वी कटं ।

* क्तस्याधारसतो ॥ ८० ॥ आधारे सति च वर्तमानकाले वा क्तस्तस्य प्रयोगे ता भवति । आसितमभिरस्यते स्म । इदमेषामासितं । इदमेषां शयितं । सतां मतः । राज्ञां बुद्धः । सतां पूजितः । राज्ञामर्चितः । साधूनां शीलितः ।

+कामुकस्य ॥ ८१ ॥ अस्य प्रयोगे ता भवति । दास्याः कामुकः । अन्यस्य स्त्रियः कामुकाः भवंति । वेश्यायाः कामुकः ।

* न शिवलोकस्वार्थमनुष्णां ॥ ८२ ॥ स्यादीनां प्रयोगे ता न भवति । ओदनं भुक्त्वा । स भुक्तं कृतवान् । ओदनं भुक्तवान् । देवदत्तेन भुक्तं । विष्णुमित्रेण पीतं । चैत्रं कारयामास । जिनान् वंदिष्यमाण । ओदनं पचमान । कटं कुर्वन् । कटं कुर्वाणः । ग्रामं जिगमिषुः । रिपून् जिष्णुः । ग्राममागामुकः । सुकरः कटो भवता । ईषत्करः कटो भवता । दुष्करः कटो भवता । ईषत्पानः पयो भवता । सुग्रामः ताण भवता ।

छोक्ते पचमानः । देवं यजमानः । धारयन् धर्मकार्यं । जैनेंद्रमधीयन् । अर्हम् पूजा । कटम् कर्ता । पठिता जैनेंद्रं । कटं कारको गच्छति । ओदनं भोजको व्रजति ।

* आम्याधमर्ण्येनः ॥ ८१ ॥ भाविनि काले आधमर्ण्ये च य इन् तस्य प्रयोगे ता न स्यात् । ग्रामं गमी । नगरमागामी । शतं दायी । सहस्रं दायी । क्वचित् भेऽपि कर्ते ।

क्यस्य वा कर्तरि ॥ ८४ ॥ क्यसंज्ञकस्य प्रयोगे कर्तरि ता वा भवति । भवतः कर्तव्या धर्मः । भवता कर्तव्यः । भवतो ज्ञेयं कर्म । भवता ज्ञेयं । भवतः खलु ग्रामो गंतव्यः । भवता खलु ग्रामो गंतव्यः । कर्तरीति किं ? गेया माणवको गाथानां ।

* द्विमाहस्ताके ॥ ८५ ॥ द्वयोः कर्तृकर्मणोः प्राप्ते कर्तरि ता वा भवत्यकारमके च विहाय । साध्वी सूत्राणां कृतिः स्वामिनः । साध्वी सूत्राणां कृतिः स्वामिना । आश्चर्यो गवां दोहो अगोपालकस्य अगोपालकेन वा । अमाक इति किं ? चिकीर्षा देवदत्तस्य कार्षिकानां । भेदका पत्राणां वादिनः ।

+ द्विपत्र ॥ ८६ ॥ द्विपे सत्प्रयोगे कर्मणि वा ता भवति । चौरस्य द्विषन् । चौरं वा ।

* कर्मणि गुणेऽन्यस्य ॥ ८७ ॥ ण्यसंज्ञकवर्जितकृत्प्रयोगे गुणेऽमुख्ये कर्मणि ता वा स्यात् । दोग्धा गोः पयसः । दोग्धा गोः पयः । गमयिता गामित्रस्य । गमयिता गोर्मित्रं । ज्ञापयिता शिष्यस्य धर्मस्य । ज्ञापयिता शिष्यस्य धर्मं । गमयिता माणवकस्य ग्रामस्य । गमयिता माणवकस्य ग्रामं । गुण इति किं ? नेता अश्वस्य । अन्यस्येति किं ? नेतव्या ग्रामं शाखा ।

* तुल्यार्थैर्भा ॥ ८८ ॥ तुल्यार्थैरुपमेयार्थैर्योगे भा भवति ता च । पित्रा तुल्यः । पितुस्तुल्यः । मात्रा तुल्यः । मातुः समानः । गुरुणा समः । गुरोः समः ।

* मद्रभद्रायुष्यक्षेमहितार्थसुखार्थैराशिष्यप् ॥ ८९ ॥ माशीर्विषयार्थे एभिर्योगे वा अप् स्यात्ताश्च । अर्थे । मद्रमस्तु जिनशासनाय । मद्रमस्तु जिनशासनस्य भद्रं कल्याणं वाऽस्तु जैनस्य जैनाय वा । क्षेमं कुशलं निरामयं वाऽस्तु संघाय संघस्य वा । दीर्घमायुराशिष्यं चिरजीवितं वाऽस्तु भव्याय भव्यस्य वा । शं सुखं शर्म वा भूयात् प्रजाभ्यः प्रजानां वा । हितं पथ्यं इष्टं प्रियं वा भवतु मित्राय मित्रस्य वा । अर्थः प्रयोजनं कार्यं वा भवतादेवदत्ताय देवदत्तस्य वा । आशिषीति किं ? आयुष्यं देवदत्तस्य तपः ।

* प्राणितूर्यांगाद्द्व एकवत्त्वं ॥ ९० ॥ प्राण्यंगानां तूर्यांगानां च द्वस्यानां द्वद्व एकवद् भवति । पाणी च पादौ च पाणिपादं । शिरोग्रीवं । कर्णनासिकं । दंतोष्ठं । शंखपटहं । मेरीमृदंगं । मार्दंगिकपाणविकं । तुल्यमिति किं ? पाणिगृध्रौ ।

* चरणं स्थेणोर्लुङ्यतुक्तौ ॥ ९१ ॥ द्वद्वपरयोः स्थेणोः प्रयोगे चरणानां तुल्यानां द्वंद्व एकवद् भवत्यनुक्तावनुवादे । कठाश्च कालापाश्च कठकालापमुदगात् । कठकौथुमं प्रत्यष्ठात् । चरणमिति किं ? उदगुर्वैयाकरणमीमांसकाः । स्थेणोरिति किं ? अभवंषु कठकालापाः । लुङीति किं ? उदयंति कठकौथुमाः । अनुक्ताविति किं ? प्रत्यष्ठुः कठकौथुमाः । आदिबभ्रमिदं ।

अध्वर्युक्रतुरनप् ॥ ९२ ॥ अध्वर्युक्रतूनामनपां द्वंद्व एकवद् भवति । अर्कश्च अश्वमेधश्च अर्काश्वमेधं । सायाह्नातिरात्रं । अध्वर्युग्रहणं किं ? इषुवज्रौ । अनबिति किं ? गवामयनादित्यानामयने ।

* अधीत्यासन्नानां ॥ ९३ ॥ अधीत्या पठित्या आसन्नानां द्वंद्व एकवद् स्यात् । पदकश्च क्रमकश्च पदकक्रमकं । क्रमकवार्तिकं । अधीत्येति किं ? आढ्यदरिद्रौ । आसन्नानामिति किं ? याज्ञिकवैयाकरणौ ।

अप्राणिजातेः ॥ ९४ ॥ प्राणिवर्जितद्रव्यजातिवाचिना द्वंद्व एकवद् भवति । आराशस्त्रि । धानाशष्कुलि । कुशकाशं । बदरामलकं । अप्राणिग्रहणं किं ? विट्शूद्रौ । जातेरिति किं ? हिमवद्विंध्यौ ।

* विलिंगे पूर्वनदीदेशं ॥ ९५ ॥ विलिंगानां भिन्नलिंगानां पुरां नदीनां देशवाचिनां द्वंद्व एकवद् भवति । मथुरापाटलिपुत्रं । कांचीकुसुमपुरं । गंगाच

देशो भवति माचि लुङि घनि सनि च परतः । प्रघसः । अघसत् । घासः । जिघत्सति ।

लिटि वा ॥ १३० ॥ अदेर्लिटि परे घस्लृ वा स्यात् । जघास । जक्षतुः । जक्षुः । आद । आदतुः । आदुः ।

* वेर्वय् ॥ १३१ ॥ वञो वय् इत्ययमादेशो भवति वा लिटि । उवाय । ऊयतुः । ऊयुः । ववौ । ववतुः । ववुः ।

ह्रो वध लिङि ॥ १३२ ॥ हन्तेर्वधादेशो भवति लिङि परतः । वध्यात् । वध्यास्ताम् । वध्यासुः । आवधिषीष्ट । आवधिषीयास्ताम् । आवधिषीरन् ।

लुङि ॥ १३३ ॥ हन्तेर्लुङि वधो भवति । अवधीत् । अवधिष्टाम् । अवधिषुः ।

वेङि ॥ १३४ ॥ हन्तेरिङि लुङि वधो वा स्यात् । आवधिष्ट । आवधिषाताम् । आवधिषत । आहत । आहसाताम् । आहसत ।

लुङेचस्योर्गा ॥ १३५ ॥ एत्योरिण्कोर्गा भवति लुङि परतः । अगात् । अगाताम् । अगुः । अभ्यगात् । अभ्यगाताम् । अभ्यगुः ।

णौ गमबोधने ॥ १३६ ॥ एत्योर्गम् भवत्यबोधनेऽर्थे णौ परतः । गमयति । अधिगमयति । अबोधन इति किम् ? अर्थान् सम्प्रत्याययति ।

सनि ॥ १३७ ॥ एत्योरबोधने गम् स्यात् सनि परतः । जिगमिषति । अधिजिगमिषति ।

इङः ॥ १३८ ॥ इङो गम् स्यात् सनि परे । अधिजिगांसते । अधिजिगांसेते । अधिजिगांसन्ते ।

गाङ् लिटि ॥ १३९ ॥ इङो गाङ् भवति लिटि परतः । अधिजगे । अधिजगाते । अधिजगिरे ।

* लुङ्लृङोर्गा सन्णिचोर्वा ॥ १४० ॥ इङो गाङ् वा स्यात् लुङि लृङि णौ च सन्परे कम्परे च परतः । अध्यगीष्ट । अध्यगीषाताम् । अध्यैष्ट । अध्यैषाताम् । अध्यगीष्यत । अध्यैष्यत । अधिजिगापयिषति । अध्यापिपयिषति । अध्यजीगपत् । अध्यापिपत् ।

* अस्तेर्भूः ॥ १४१ ॥ अस्तेरस्यस्य भू इत्येतमादेशो भवतोऽगि परतः । बभूव । बभूवतुः । बभूवुः । भविता । भवितुम् । भवितव्यम् ।

* चक्षः ख्याञ् वाचि ॥ १४२ ॥ चक्षो वाचि वर्तमानस्य ख्याञ् भवति । आख्याता । आख्यातुम् । आख्यातव्यम् । वाचीति किम् ? चक्षुः । विचक्षणः । आचष्ट । अर्थान् संचष्टे । चक्षनेऽत्र ।

वा लिटि ॥ १४३ ॥ चक्षः ख्याञ् भवति लिटि वा । आचख्यौ । आचख्यतुः । आचचक्षे । आचचक्षाते ।

* अजेर्व्यघञपि ॥ १४४ ॥ अजेर्वी भवति घञ्अप्वर्जितेऽगि परतः । वीयात् । वीयास्ताम् । वीयते । प्रवेयम् । अघञप्क्तीति किम् ? समाजः । समजः । उदजः पशूनाम् ।

वायुसे स्तो ॥ १४५ ॥ अजेर्वीभावो भवति वायुके सुविषये । प्रवयणो दण्डः । प्राजनो दण्डः । प्रवेता । प्राजिता ।

* यङः उप ॥ १४६ ॥ यङो बहुलमुप् भवति । रोरूयते । रोरोति । रोरवीति । लालप्यते । लालपिति । लालपीति ।

* अचि ॥ १४७ ॥ यङोऽचि परतो नित्यमुप् भवति । चेच्य । देय । पोपुव । बोभुव । दनीध्वस । मरीमृज ।

+ नोतः ॥ १४८ ॥ उकारान्तात्परस्य यङोऽच्युप् न स्यात् । रोरूय । नोनूय । लोलूय ।

* घुमास्थागापाजहातिसां सेर्मे ॥ १४९ ॥ घुम्यो मादिभ्यश्च सेरुप् भवति मे परतः । अदात् । अधात् । अभूत् । अस्थात् । अगात् । अध्यगात् । अपात् । मे इति किम् ? अदधत् ।

वा घ्राधेट्छाशासः ॥ १५० ॥ घ्रादिभ्यः सरुप् स्याद् वा मे परतः । अघ्रात् अघ्रासीत् । अधात् अधासीत् । अच्छात् अच्छासीत् । असात् असासीत् ।

* तन्भ्यस्यात्वे ॥ १५१ ॥ तनादिभ्यः सेर्वोप् भवति थासि ते च परतः । अतथाः । अतनिष्ठाः ।

१ अध्यगीष्टमित्यत्रासिद्धम् वाक्ये—धनि—अध्यगीषाता इति इत्यस्वस्याशिषिद्धिः । [illegible]

यादीनां द्वे बहुषु यस्यस्तस्योप् भवत्यस्त्रियाम् । तैकायनश्च फैतवायनश्च तिककितवाः । औरसायनश्च भाङ्कन्यश्च उरसभङ्कटाः । भङ्करभौरयाः ।

+ वैया द्वपादे ॥ १६४ ॥ द्वे बहुत्वे वर्तमानो यो भ्रष्टादिस्तस्य उपोप् भवति यथापूर्वम् । भार्गवश्च वांगश्च सौरसश्च भगवंगसुराः । यस्कश्च भ्रगुश्च । भग वस्सवाभ्रा । कुण्डिनागस्त्यवसिष्ठाः । उपेति किम् ? यास्कसभाः छात्राः ।

+ वाऽन्येन ॥ १६५ ॥ द्वपादेर्वोप् भवति अन्येन सह भ्रष्टादीनां द्वे बहुत्वे । भार्गवश्च वांगश्च दाक्षिश्च भगवंगदाक्षयः । भार्गवांगदाक्षयः । गर्गवत्सौपगवाः । गार्ग्यवात्स्यौपगवाः ।

यञादेर्द्व्येकेषु वाया पे ॥ १६६ ॥ यञादेस्तया वोप् भवति द्वयोरेकस्मिंश्च वर्तमानस्य वाया षसे । गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुलम् । गार्ग्यकुलम् । विदकुलम् । वैदकुलम् । अगस्तिकुलम् । आगस्त्यकुलम् । यञादेरिति किम् ? भार्गकुलम् । द्व्येकेष्विति किम् ? गार्ग्याणां कुलं गर्गकुलम् । वाया इति किम् ? परमगार्ग्यः । प इति किम् ? गार्ग्यस्य समीपं उपगार्ग्यम् ।

सुपो धुमृदोः ॥ १६७ ॥ धुमृदोरन्तर्गतस्य सुप उप् भवति । पुत्रमिच्छत्यात्मनः पुत्रकाम्यति । पटीयति । औपगवः । राजपुरुषः । यतः । यत्र । सर्वज्ञः ।

* धे ॥ १६८ ॥ धे परस्य सुप उप् भवति । ततः । तत्र । कृत्वा । च । वा । ह । अह । एव ।

हात् ॥ १६९ ॥ हसात् परस्य सुप उप् भवति । अधिस्त्रि । उपवधु । एकमुनि । द्विमुनि ।

नावोऽम्त्वकायाः ॥ १७० ॥ ह्रस्वकारान्तात् सुपो नोप् भवति अम् तु भवति तस्य विहस्य । उपकुम्भं तिष्ठति । पश्य देहि स्वं वा । अत इति किम् ? उपाग्नि । अकाया इति किम् ? उपकुम्भादानय । उपमणिकमानय ।

* भाया वा ॥ १७१ ॥ ह्रस्वकारान्ताद् भाया वाऽम् भवति । उपकुम्भम् । उपकुम्भेन । उपकुम्भैः कृतम् ।

१। अत्र पूर्वं यथा निर्दिष्टनिर्दिष्टो विकारो विभक्त्यन्त्यमे ...[illegible]

* ईपः ॥ १७२ ॥ ह्रस्वकारान्तादीपो वाऽम् भवति । उपकुम्भे निधेहि । उपकुम्भं निधेहि ।

+ स्यिनयद्वे ॥ १७३ ॥ स्यनयवान्नदीलक्षणात् अद्रिलक्षणाच्च ह्रस्वकारान्तादीपोऽम् भवति नित्यम् । एकविंशतिभारद्वाजम् । त्रिकोशार्कम् । द्वियमुनं वसति । सप्तगङ्गं वसति । त्रिगोदावरं वसति । सुमद्रं । सुमगधम् ।

+ परस्परादेर्वाम्सुपोऽपुंसि ॥ १७४ ॥ परस्परादीनामपुंसि सुप आम् वा भवति । इमे सख्यौ परस्परां भोजयतः । परस्परं भोजयतः । आभिः सखीभिः परस्परां भोज्यते । परस्परेण वा भोज्यते । इमाः सख्यः परस्परां प्रयच्छति । परस्परस्मै वा प्रयच्छति । इमे सख्यौ अन्योन्यां भोजयतः । अन्योन्यं वा भोजयतः । आभिः सखीभिरन्योन्यां भोज्यते अन्योन्येन वा भोज्यते । इमे सख्याविवरेतरां इतरेतरं वा भोजयतः । इमे कुले परस्परां परस्परं अन्योन्यां अन्योन्यं इतरेतरां इतरेतरं वा भोजयतः । कुले परस्परेण परस्परां अन्योन्येन अन्योन्यां इतरेतरां इतरेतरेण वा भोज्यते । कुलानि परस्परां परस्परस्मै वा प्रयच्छति । अपुंसीति किम् ? परस्परमिमे जना भोजयति । अन्योन्यामिमे जना भोजयति ।

---

इति जैनेन्द्र ( शब्दार्णव ) व्याकरणे
शब्दार्णवचन्द्रिकायां लघुवृत्तौ
प्रथमोऽध्यायः ।



तेभ्यो लोहितादिभ्यश्च च्व्यर्थे क्यष् भवति । अदमद् मद् भवति दमदमायति । दमदमायते । दृढदृढायति । दृढदृढायते । लोहितायति । लोहितायते । मित्रायति । करुणायति ।

*सुखादेर्वृमीप ॥ १८ ॥ सुखादेरिवतात् भुज्यर्थे क्यङ् भवति । सुखं भुङ्क्ते सुखायते । दुःखायते । भुजीति किं ? सुखं वेदयते प्रसाधको देवदत्तस्य ।

+ कष्टकक्षकृच्छ्रसत्रगहनात् पापे चिकीर्षौ ॥१९॥ कष्टादेरिवताद् पापे वर्तमानात् चिकीर्षार्थे क्यङ् स्यात् । कष्टं चिकीर्षति कष्टायते । कक्षायते । कृच्छ्रायते । सत्रायते । गहनायते ।

वाष्पोष्मफेनादुद्वमी ॥ २० ॥ वाष्पादेरिवतादुद्वमनार्थे क्यङ् भवति । वाष्पमुद्वमति वाष्पायते । ऊष्माणमुद्वमति ऊष्मायते । फेनायते नदी ।

*शब्दादेः कृणि ॥ २१ ॥ शब्दादेरिवतात् करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते ।

*रोमन्थादुद्वर्ते ॥ २२ ॥ रोमन्थशब्दादुद्वर्ते वर्तमानात् कृमर्थे क्यङ् भवति । रोमन्थायते गौः । उद्वर्त इति किं ? रोमन्थं करोति कीटकः ।

*तपसः क्यष् ॥ २३ ॥ तपःशब्दादिवतात् कृमि क्यष् भवति । तपः करोति तपस्यति ।

*नमोवरिवश्चित्रङः पूजासपर्याविस्मये ॥ २४ ॥ एभ्यः पूजादिष्वर्थेषु वर्तमानेभ्यः कृमर्थे क्यष् भवति । नमस्करोति नमस्यति मुमति गार्ग्यं । वरिवस्यति गुरून् । चित्रीयते । किमाद' पूजादिष्विति किं ? नमस्करोति ।

+ निरस्यंगेभ्यो णिङ् ॥ २५ ॥ अंगेभ्य इवतेभ्यो निरस्यर्थे णिङ् भवति । हस्तं निरस्यति हस्तयते । पादयते । निरसीति किं ? हस्तमाचष्टे हस्तयति ।

*पुच्छभाण्डाददस्वौ ॥ २६ ॥ आभ्यां अस्यर्थे चिमर्थे च णिङ् भवति । पुच्छमुदस्यति उत्पुच्छयते । परिपुच्छयते । भाण्डं संचिनोति समांडयते । परिभांडयते ।

*चीवरात्परिधार्ज्जो ॥ २७ ॥ चीवरात् परिधाने अर्जने च णिङ् भवति । चीवरं परिधत्ते समर्जयति वा परिचीवरयते भिक्षुः ।

+ मृदो ण्यर्थे णिङ् बहुलं ॥२८॥ मृदो धूनामर्थे णिङ् भवति बहुलं । सूत्रं करोति सूत्रयति व्याकरणं । मुण्डयति माणवकं । मिश्रयति धान्यं । श्लक्ष्णयति वस्त्रं । पाशं विमोचयति विपाशयति । रूपं दर्शयति रूपयति । पयो भुंक्ते-पयो व्रतयति । सावद्यं न भुंक्ते—सावद्यं व्रतयति । लोमान्यनुमार्ष्टि अनुलोमयति । वर्णेन समाच्छादयति सवर्णयति । सेनया अभियाति अभिषेणयति । वर्मणा संनह्यते सवर्मयति । वीणयोपगायति उपवीणयति । श्लोकैरुपस्तौति उपश्लोकयति । म च भवति—आख्यानमाचष्टे ।

+ श्वेताश्वाश्वतरगालोडिताह्वरकस्याश्वतरेतकलुक् च ॥ २९ ॥ एषां णिन्यश्वतरे तकानां लुक् भवति । श्वेताश्वमाचष्टे श्वेतयति । अश्वतरं-अश्वयति । गालोडित-गालोडयति । आह्वरकं-आह्वरयति । णिङ् संनियोगार्थस्त्वकारः ।

*हस्वकस्त्वचा ॥ ३० ॥ हस्विकत्विचा णिष्यदन्तता निपात्या । हस्वि गृह्णाति हस्वयति । कस्वि—कस्वयति । त्वचं—त्वचयति । अस्य निपातः किं ? अजहस्वत् ।

*वेदार्थसत्यस्यापः ॥ ३१ ॥ एषां णिप्याकारान्तादेशो भवति । वेदमाचष्टे वेदापयति । अर्थापयति । सत्यापयति ।

*पौर्यङ् भृशाभीक्ष्णेऽज्झभृद्रुचेः ॥ ३२ ॥ धुमिरुचिमुक्तस्वरोर्भृशेऽभीक्ष्णे चार्थे यङ् भवति । भृशं पुनः पुनर्वा पठति पापठ्यते । देदीप्यते । बेभुज्यते । भृशाभीक्ष्ण इति किं ? ओदनं पचति । अज्झभृद्रुचेरिति किं ? भृशं शोभते । पुनः पुना रोचते ।

+ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोः ॥ ३३

बिभयाञ्चभूव । बिभयामास । बिभाय । जिह्रयाञ्च
कार । जिह्रयाम्बभूव । जिह्रयामास । जिह्राय ।
बिभराञ्चकार । बिभराम्बभूव । बिभरामास । बभार ।
जुहवाञ्चकार । जुहवाम्बभूव । जुहवामास । जुहाव ।

✿ विदां कुर्वन्त्विति ॥ ५१ ॥ विदां कु वा
निपात्यो लोटि परतः । विदांकुर्वाणि । वेदानि ।
विदांकरवाव । वेदाव । विदांकरवाम ।
वेदाम । विदांकुरु । विद्धि । विदांकुरुत ।
वित्त । विदांकुरुतं । वित्तं । विदांकरोतु । वेत्तु ।
विदांकुरुतां । वित्तां । विदांकुर्वन्तु । विदन्तु ।

सिर्लुङि ॥ ५२ ॥ धो सिस्या भवति
लुङि परतः । अकार्षीत् । अमंसीत् ।

स्पृशमृशकृषतृपदृपो वा ॥ ५३ ॥ एभ्यो
लुङि सिर्वा स्यात् । अस्प्राक्षीत् । अस्पार्क्षीत् । अस्पृ
क्षत् । अम्राक्षीत् । अमार्क्षीत् । अमृक्षत् । अक्रा
क्षीत् । अकार्क्षीत् । अकृक्षत् । अत्राप्सीत् । अता-
र्प्सीत् । अतृपत् । अद्राप्सीत् । अदार्प्सीत् । अदृपत् ।

✿ इकः शलोऽनिटोऽदृशः क्सः ॥ ५४ ॥
इकः परो यः शल् तदन्तात् दृशिवर्जितात् धोरनिटः
लुङि क्सो भवति । अलिक्षत् । अधिक्षत् । अधुक्षत् ।
इक इति किं ? अधाक्षीत् । शल इति किं ? अभै
त्सीत् । अनिट इति किं ? अकोषीत् । अदृश इति
किं ? अद्राक्षीत् ।

श्लिषः स्वार्थे ॥ ५५ ॥ श्लिषः स्वार्थे लुङि
क्सो भवति । आश्लिक्षत् भार्यां दत्तः । स्वार्थ इति
किं ? उपाश्लिषत् जतु च काष्ठं च ।

✿ णिश्रिद्रुस्रुकमिभ्यः कर्तरि कङ् ॥ ५६ ॥
ण्यन्तेभ्यः श्र्यादिभ्यश्च कर्तृवाचिनि लुङि परतः
कङ् भवति । अचीकरत् । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । अचकमत् । कर्तरीति किं ?
अकारयिषातां कटौ पुरुषेण ।

वा धेट्श्व्योः ॥ ५७ ॥ आभ्यां लुङि परतः
कङ्वा स्यात् । अदधत् । अधात् । अधासीत् ।
अशिश्वियत् । अश्वत् । अश्वयीत् ।

✿ अस्यतिवक्तिख्यातेरङ् ॥ ५८ ॥ एभ्यः कर्त
रि लुङ्यङ् भवति । अवोचत् । पर्यास्थत । आख्यत् ।
आख्यतां । आख्यन् ।

लिपिसिचिह्वार्थे ॥ ५९ ॥ एभ्यो लुङ्यङ्
भवति । अलिपत् । असिचत् । आह्वत् । आरत् ।

ते वा ॥ ६० ॥ लिपादेस्ते लुङ्यङ् वा भवति ।
अलिपत । अलिप्त । असिचत । असिक्त । आह्वत ।
आह्वास्त । समारत । समार्त ।

✿ पुषद्युतादिलृदितः सर्तिशास्त्यर्तेः ॥ ६१ ॥
पुषादेः द्युतादेर्लृदितश्च सर्तिशास्तिभ्यां च मे
लुङ्यङ् भवति । अपुषत् । व्यद्युतत् । व्यश्वितत् । अपुषत्
अशकत् । अशुचत् । अगमत् । अपतत् । असरत् ।
अशिषत् । मे इति किं ? व्यद्योतिष्ट । व्यश्वेतिष्ट ।

वेरितः ॥ ६२ ॥ इरनुबन्धेतो धोर्मे लुङ्यङ्
वा भवति । अरुधत् । अरौत्सीत् । अभिदत् । अभैत्सीत् ।

✿ जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्वेः ॥ ६३ ॥
एभ्यो लुङ्यङ् वा स्यात् । अजरत् । अजारीत् ।
अश्वत् । अश्वयीत् । अस्तभत् । अस्तम्भीत् । न्यम्रुचत् ।
न्यम्रोचीत् । न्यम्लुचत् । न्यम्लोचीत् । अग्रुचत् ।
अग्रोचीत् । अग्लुचत् । अग्लोचीत् । न्यग्लुचत् ।
न्यग्लुञ्चीत् ।

✿ दीपजनबुधपूरितायिप्यायस्ते ञिः ॥ ६४ ॥
दीपादेः कर्तरि लुङि ते परतः ञिर्वा भवति । अदीपि ।
अदीपिष्ट । अजनि । अजनिष्ट । अबोधि । अबुद्ध ।
अपूरि । अपूरिष्ट । अतायि । अतायिष्ट ।
अप्यायि । अप्यायिष्ट । त इति किं ? अदीपिषातां ।

पदः ॥ ६५ ॥ पदः लुङि ते परतः ञिर्भ-
वति । उदपादि मैत्र्यं । समपादि सस्यं ।

✿ कर्मणि ॥ ६६ ॥ कर्तृत्वेन विवक्षिते
कर्मणि लुङि ते ञिर्भवति । अकारि कटः स्व
यमेव । अकृत कटः स्वयमेव । अकारि केदारः ।
अकारिष्ट केदारः स्वयमेव ।

---

१ । पूर्वो वधिरप्येषो ' बहुलं धी इति धातुप्रत्ययविधे
वधिकचनमेव प्रायः गेऽन्यापरस्य ।

दुहश्च ॥ ६७ ॥ दुहेः कर्मकर्तरि युक्ति ते वा ञिर्भवति । अदोहि गौः स्वयमेव । अदुग्ध गौः स्वयमेव । नियमार्थं—दुह एव हलन्तात् ञिर्नान्यतः। अभेदि कुशूलः स्वयमेव। अच्छेदि काष्ठं स्वयमेव।

* ऋणौ ॥ ६८ ॥ भोमपर्ये युक्ति ते ञिर्भवति । आसि भवता । अहारि भागा भवता । अकारि कटो भवता ।

न रुधः ॥ ६९ ॥ रुधः कर्मकर्तरि ञिर्न स्यात् । अरुद्ध गौः स्वयमेव ।

तपोऽनुतापे ॥ ७० ॥ तपः कर्मकर्तरि अनुतापे च ञिर्न स्यात् । अतप्त तपः स्वयमेव साधुः । अन्वतप्त पापेन कर्मणा । अनुतापे चेति किं ? अतापि पृथ्वी राज्ञा ।

यक् दुहः ॥ ७१ ॥ दुहेः कर्मकर्तरि यक् न स्यात् । दुग्धे गौः स्वयमेव । अदुग्ध गौः स्वयमेव ।

नमः शप् ॥ ७२ ॥ नमेः कर्मकर्तरि यक् न भवति शप् स्यात् । नमते दण्डः स्वयमेव । अनमत दण्डः स्वयमेव ।

+ स्विपिसिमिभिर्षिपिर्ग्रपिबचक्षोम भिषा ॥ ७३ ॥ ऐ चीनां ण्यंतानां ग्रन्थादीनां च नमेश्च ञिर्यक् च न भवति । व्याकृत सैन्धवाः स्वयमेव । विकुर्वते सैन्धवाः स्वयमेव । अपीपचत ओदनः स्वयमेव । पाचयते ओदनः स्वयमेव । उदचिश्रिपत दण्डः स्वयमेव । उच्छ्रयते दण्डः स्वयमेव । अशिश्रियत मेखला स्वयमेव । श्रयते मेखला स्वयमेव । अग्रन्थिष्ट मेखला स्वयमेव । ग्रन्थते मेखला स्वयमेव । अग्रन्थत कथा स्वयमेव । ग्रन्थे कथा स्वयमेव । प्रास्नोष्ट गौः स्वयमेव । प्रस्नुते गौः स्वयमेव । अनंस्त दण्डः स्वयमेव । नमते दण्डः स्वयमेव ।

+ भूषार्थसन्किरादीनां यक् च ॥ ७४ ॥ भूषार्थानां सन्नन्तानां किरादीनां च कर्मकर्तरि यक् ञिश्च न भवति । भूषयते कन्या स्वयमेव । अबूभुषत कन्या स्वयमेव । मण्डयते कन्या स्वयमेव । अममण्डत कन्या स्वयमेव । अलंकुरुते कन्या स्वयमेव । अलमकृत कन्या स्वयमेव । अलमचीकरत कन्या स्वयमेव । चिकीर्षते कटः स्वयमेव । अचिकीर्षिष्ट स्वयमेव कटः । बिभित्सते कुशूलः स्वयमेव । अबिभित्सिष्ट कुशूलः स्वयमेव । किरते हस्ती स्वयमेव । अकीर्ष्ट हस्ती स्वयमेव । गिरते ग्रासः स्वयमेव । अगीर्ष्ट ग्रासः स्वयमेव ।

कुषरञ्जोः श्यो मे वा ॥ ७५ ॥ कुषिरञ्जिभ्यामेताभ्यां कर्मकर्तरि मे श्यो वा भवति । कुष्यति पादः स्वयमेव । कुष्यते पादः स्वयमेव । रज्यति वस्त्रं स्वयमेव । रज्यते वस्त्रं स्वयमेव । यदा श्यो न भवति तदा यग्विधी स्तः ।

+ कर्मवद्धेऽभवादीनां ॥ ७६ ॥ अभवादि वर्जितानां धूनां कर्मकर्तरि विहिते लकारे कर्मवत् कार्यं भवति । भिद्यते कुशूलः स्वयमेव । लूयते लूयमानो वा केदारः स्वयमेव । अपाच्योदनः स्वयमेव । अभवादीनामिति किं? भवत्युदकं स्वयमेव । गच्छत्युदकं स्वयमेव ।

* तपस्तपोऽर्थे ॥ ७७ ॥ तपेर्धोः तपोऽर्थे तपःकर्मकस्य कर्ता कर्मवद् भवति । तप्यते तपः साधुः । अतप्यत तपस्तापसः । तपोऽर्थेरिति किं ? उत्तपति सुवर्णं सुवर्णकारः ।

+ सृजः भावे ॥ ७८ ॥ सृजः भाववति कर्तरि लकारे सति कर्मवत् कार्यं स्यात् । सृज्यते माला धार्मिकः । भाव इति किं? सृजति मालां मालिकः ।

+ क्वचित् करणे ॥ ७९ ॥ धोः करणे कर्तरि लकारे सति क्वचित् कर्मवत् कार्यं भवति । परिवारयन्ति पुरुषाः कण्टकैर्वृक्षं । परिवारयति कण्टकाः स्वयमेव वृक्षं । क्वचिदिति किं ? साधु असिश्छिनत्ति ।

णे यक् ॥ ८० ॥ धोर्भावकर्मणि णे परतः यक् भवति । सुप्यते भवता । आस्यते भवता । म्लायते भवता । क्रियते कटः । भ्रियते कर्मकारः । ह्रियते भारः ।

कर्तरि शप् ॥ ८१ ॥ धोः कर्तृवाचिनि णे परतः शप् भवति । भवति । तरति । पठति । पचति । पचते ।

* ह्वादेरलुप् ॥ ८२ ॥ ह्वादेरदादेश्चोत्त-

रस्य सप उञ्छपौ स्तः । शुहोति । बिभर्ति । जिहे ति । मर्ति । स्याति । धौति । भ्यत्ति । वेवेषि । सूते । इष्टे ।

दिवादेः श्यः ॥ ८३ ॥ दिवादिभ्यः श्यो भवति कर्तरि ग परतः । दीव्यति । सीव्यति । कुप्यति । पुष्यति । सूयते ।

वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ॥८४॥ एभ्यो गे परतः श्यो वा स्यात् । भास्यते । भासते । म्लास्यते । म्लासते । भ्राम्यति । भ्रमति । क्राम्यति । क्रामति । त्रस्यति । त्रसति । त्रुट्यति । त्रुटति । लष्यति । लषति ।

यसः ॥ ८५ ॥ यसेर्वा श्यो भवति गे परतः । यस्यति । यसति ।

सम ॥ ८६ ॥ समपूर्वाद् यसः श्यो वा स्यात् । संयस्यति । संयसति । नियमोऽयं-गेः सम एव वा श्यो नान्यतः । प्रयस्यति । आयस्यति । वियस्यति ।

स्वादेः श्नुः ॥ ८७ ॥ स्वादिभ्यः श्नुर्भवति कर्तरि ग परे । सुनोति । सुनुते । मिनोति । मिनुते । धूनोति ।

श्रो शृः ॥ ८८ ॥ श्रु इत्येतस्य कर्तरि गे परतः श्नुर्भवति शृ इत्ययं चादेशः । धर्म शृणोति ।

वाऽक्षः ॥ ८९ ॥ अक्षतेर्वा श्नुर्भवति । अक्ष्णोति । अक्षति ।

तक्षः स्वार्थे ॥ ९० ॥ तक्षतेः स्वार्थे त नूकरणे श्नुर्वा स्यात् । तक्ष्णोति तक्षति काष्ठं । स्वार्थे इति किं ? संतक्षति वाग्भिर्दुर्जनः ।

* तुदः शः ॥ ९१ ॥ तुदादिभ्यो गे परतः शो भवति । तुदति । तुदते । दिशति । क्षिपति । कृषति । कृषते । पणते । कमते ।

* रुधां श्नम् ॥ ९२ ॥ रुधादीनां गे श्नम् भवति । रुणद्धि । भिनत्ति । छिनत्ति । युनक्ति ।

कृञ्तनादेरुः ॥ ९३ ॥ कृञस्तनादि भ्यश्च गे उर्भवति । करोति । तनोति । वनुते । मनुते ।

पिन्विकृण्व्योरच ॥ ९४ ॥ आभ्यां उ र्भवति अकारश्चान्तादेशः । पिनोति । कृणोति ।

क्र्यादेः श्ना ॥ ९५ ॥ क्र्यादिभ्यः श्ना भवति ग परतः । क्रीणाति । प्रीणाति । गृह्णाति । वृणीते ।

स्तंभुस्तुंभुस्कंभुस्कुंभुस्कुञ्भ्यः श्नुश्च ॥९६॥ एभ्यः श्नुर्भवति कर्तरि गे श्ना च । स्तभ्नाति । स्तभ्नोति । स्तुभ्नाति । स्तुभ्नोति । स्कभ्नाति । स्कभ्नोति । स्कुभ्नाति । स्कुभ्नोति । स्कुनाति ।

हौ हलः श्नः शानः ॥ ९७ ॥ हलः पर स्य श्नासस्य शानो भवति हौ परतः । गृहाण । अशान । कुषाण । मुषाण । हल इति किं ? क्रीणीहि ।

* ईषा याक् ॥ ९८ ॥ अत्र योरधिकारे ईषा निर्दिष्ट याक्संज्ञ भवति । कमण्डलुः । कुम्भकारः । याक्प्रदेशाः-याकमिङ् इत्येवमादयः ।

कृदमिङ् ॥ ९९ ॥ इत प्रभृत्यत्र धा-रधिकारे कृत्संज्ञकास्त्या वेदितव्याः मिङ् वर्जयित्वा । वक्ष्यति—तव्यानीयौ । स्तोतव्यः । स्तवनीयः ।

याकू केपोऽसमः ॥१००॥ कि इत्येतस्मात् याकू असमरूपा वा भवति । इत्यधिकारे वेदितव्यः । जयः । जलम्ः । ज्ञः । ज्ञाता । ज्ञायकः । याकूकेरिति किं ? विक्षीर्षा । सेरस्था बाधकः । असम इति किं ? अण को बाधत एव । गोदः । कम्बदः

ण्वोर्म्यौ ॥१०१॥ ण्व इत्येतस्मात् प्राग् ये त्यास्ते म्यसंज्ञका भवति । पुत्रस्य कर्तव्यं दत्तस्य करणीयं । म्यप्रदेशाः—म्यस्य वा कर्तरि,, इत्येवमादयः ।

तव्यानीयौ ॥१०२॥ धोरेतौ म्यौ स्तः कर्तव्यं । हरणीयं ।

* योऽचोऽध्यायाव ॥१०३॥ अचंतात्धोर्यो भवति ग्यादिवर्जितात् । देयं । पेयं । मेयं । अव

---

१ । लित्ववर्ण ... । लेख-एकमात्र की भिन्नमम्-दिर्ले ... ।

सृजेर्ण्यो भवति । पाणिभ्यां सृज्यते इति पाणिसर्ग्या रज्जुः । समवसर्ग्यं कटः ।

**भोरावश्यके ॥ १२४ ॥** उवर्णान्ताद्धो-रावश्यकेऽर्थे ण्या भवति । अवश्यपाव्य । अवश्य-लाव्य । आवश्यक इति किं ? पव्य । लव्य ।

*** वाऽमावास्याधारे ॥ १२५ ॥** अमावापि वसेर्ण्यो भवति आधारे । प्रत्व वा निपात्यः । अमा सह वसतः सूर्याचन्द्रमसौ अस्यां तिथाविति अमाव-स्या । अमावास्या ।

*** पाय्यधाय्यसान्नाय्यनिकाय्यानाय्यम-नाय्यं मानहविर्निवासाग्नित्यासम्मतौ॥१२६॥**

पाय्यादयो मानादिष्वर्थेषु निपात्यन्ते । मीयतेऽनेनेति पाय्य मानं । माको ण्ये पत्वं । धीयते समिधोऽनया अग्नयेति धाय्या ऋक् । धाञ्यो ण्य । सान्नाय्यं हविः । सम्पूर्वाण्णीञो ण्यायादेशो वृद्धीश्च । निकाय्यो निवा-सः । निपूर्वात् चिञो ण्यायादेशौ कुत्वं च । आनाय्यो दक्षिणाग्निः । आङ्पूर्वान्नयतेर्ण्यायादेशौ अनित्येऽर्थे । प्र णाय्यश्चौरः । प्रणीञो ण्यायादेशौ असम्मतेऽर्थे । मेय । धेय । सन्नेयं । निचेयं । आनेय । प्रणेयमित्यन्यत्र ।

*** कुण्डपाय्यसंचाय्यराजसूया ऋतौ॥१२७॥**

कुण्डपाय्यादयः ऋतौ ण्यान्ताः निपात्यन्ते । कुण्डैः पी-यते सोमोऽस्मिन्निति कुण्डपाय्यः । ण्ये युक् । सञ्ची-यत इति संचाय्यः । संचिञो ण्यायादेशौ । राज्ञा सूयते राजा वा सूयतेऽस्मिन् इति राजसूयः ऋतुः । रुगभ-त्यए दीर्घ । कुण्डपानं । संचेयं । राजसवनमन्यत्र ।

*** परिचाय्योपचाय्यसमूह्यचित्योऽग्नौ १२८**

परिचाय्यादयो निपात्या अग्न्यर्थे । पर्युपाच्चिञो ण्या-यादेशौ । परिचाय्यः । उपचाय्यः । समूह्यः । समः वहेर्ण्यः । चिनोऽग्निः । चित्यः क्यए । परिचेयः । उपचेयः । समुहितव्यः । चेयोऽन्यत्र ।

**ण्वुतृच् ॥ १२९ ॥** धुभ्यो ण्वुतृचौ भव-तः । पाचकः । पक्ता । भावकः । भविता । दर्श-कः । द्रष्टा । मारकः । मर्ता ।

*** पचादिभ्योऽच् ॥ १३० ॥** एभ्यः अच् भवति । पचतीति पचः । वचः । चरः । वदः । वरः । करः ।

*** नन्द्यादिभ्योऽन ॥ १३१ ॥** एभ्यः अन स्यो भवति । नन्दयतीति नन्दनः । दर्पणः । रमणः । संक्रन्दनः । जनार्दनः ।

*** ग्रहादिभ्यो णिन् ॥ १३२ ॥** एभ्यो णिन् भवति । गृह्णातीति ग्राही । उत्साही । स्थायी । मन्त्री ।

**+ नौ ग्रुनादिभ्यष्ठरस ॥ १३३ ॥** नौ वा-चि एभ्यो णिन् स्यात् । निग्राही । निधायी । निवेशी । निवापी । निरक्षी ।

**+ नञि याच्ञाभ्यसूयसर्व्याहृभ्यादुः १३४**

नञ्पूर्वेभ्यो याचादिभ्यो णिन् स्यात् । न याचते अयाची । अभावी । अवादी । अवासी । असंव्या-हारी । अव्याहारी ।

**+ आविष्टेऽयः ॥ १३५ ॥** नञ्वाचि भोर अतात् णिन् स्यादाविष्टेऽर्थे । न करोतीत्यकारी परशुः । अहारी गंध । आविष्ट इति किं ? अकर्ता कटस्य दत्तः ।

*** रुधरापोऽपे ॥ १३६ ॥** अपे वाच्याभ्यां णिन् स्यात् । अपरोधी । अपराधी ।

**+ इन् च परौ भुवः ॥ १३७ ॥** परौ वाचि भवतेरिन् भवति णिन् वा । परिभवी । परिभावी ।

**+ वौ विशस्यो देशे ॥ १३८ ॥** वौ वाचि विशतीशिभ्यां देशेऽर्थे इन् स्यात् । विसयी देशः । विषयी देशः ।

**ज्ञाप्रीगृकृभ्यः कः ॥ १३९ ॥** ज्ञादिभ्य इगुपधेभ्य भोः कस्यो भवति । जानातीति ज्ञः । किरः । गिरः । प्रियः । क्षिपः । विबुधः । कृशः ।

*** गावापोऽनिक् ॥१४०॥** गौ वाचि भोरा-कारान्तात् को भवत्यनिक् च । प्रस्थः । सुरः । व्याघ्रः । सुत्रः । सुग्मः । सुग्मः । गाविति किं ? त्राता । अनिगिति किं ? महः । सुग्मः । विग्यः ।

**पाघ्राध्माधेट्दृशः शः ॥ १४१ ॥** गौ वाचि पादिभ्यः शो भवति । उत्पिबः । विजिघ्रः । उद्धमः । विधयः । उत्पश्यः ।

* कूलाभ्रकरीषे कषः ॥ ४४ ॥ कूलादिषु वाप्सु कषेः खश् भवति । कूलं कषयतीति कूलंकषा नदी । अभ्रंकषो वायुः । करीषंकषा वात्या ।

* सर्वे ॥ ४५ ॥ सर्वशब्दे वाचि कषेः खश् स्यात् । सर्वंकषो विप्रः ।

* सहे ॥ ४६ ॥ सर्वे वाचि सहेः खश् स्यात् । सर्वं सहते सर्वंसहा भूरयः ।

* विध्वरुस्तिले तुदः सत्वं ॥ ४७ ॥ एषु वाप्सु तुदेः खश् स्यात् वाचः सकारस्य च खं । विधुंतुदो राहुः । अरुंतुदो वैद्यः । तिलंतुदो वायुः ।

* द्विषत्परे तापेः खच् त ॥ ४८ ॥ द्विषति तकारान्ते परे च वाचि तापेः खच् भवति वाचस्तकारस्य च तः । द्विषन्तं तापयतीति द्विषंतपः । परंतपः ।

* वाचंयमो व्रती ॥ ४९ ॥ वाक्पूर्वात् यमेः खच् अमन्तत्वं निपात्यते व्रतिनि गम्यमाने । वाचं यच्छतीति वाचंयमो व्रती । वाग्यामोऽन्यः ।

मृदसृमिधारिदमसृतपसहः संज्ञी ॥ ५० ॥ एभ्यः कर्मणि सुपि च वाचि खच् स्यात् संज्ञी । विश्वंभरा भूः । रथेन तरतीति रथंतरो राजा । पतिं वृणोतीति वृणुते वा पतिंवरा कन्या । शत्रुंजयो गिरिः । युगं धारयतीति युगंधरो राजा । अरिं दाम्यति अरिंदमः । शत्रुंतपः । शत्रुंसहः । संज्ञीति किं ? भूमिधारः ।

* मेघर्तौ कृञः ॥ ५१ ॥ मेघर्त्योर्वाचोः कृञः खच् स्यात् । मेघंकरः । ऋतिंकरः ।

* भये ॥ ५२ ॥ भये वाचि कृञः खच् स्यात् । भयंकरः ।

क्षेमप्रियमद्रेऽण् च ॥ ५३ ॥ क्षेमादौ वाचि कृञः खच् स्यादण् च । क्षेमंकरः । क्षेमकारः । प्रियंकरः । प्रियकारः । मद्रंकरः । मद्रकारः ।

* पुरंदरभगंदरस्मरदासूर्यपश्योग्रंपश्या ॥ ५४ ॥ पुरंदरादयः शब्दाः खजन्ताः खमन्ताश्च निपात्यन्ते । पुरं दारयतीति पुरंदरः । पूःशब्द वाचि दारेः खजमन्तता च वाचो निपात्यते । भगंदरो व्याधिः । खच् । इरया माद्यति—इरंमदः । इराशब्द वाचि मदेः खच् । न सूर्यं पश्यतीति असूर्यंपश्याः राजदाराः । उग्रंपश्यः । सूर्ये नञ्पूर्वे उग्रे च वाचि दृशः खच् ।

* सुभगाढ्यस्थूलपलितनग्नान्धप्रियेऽच्वौ च्वौ भ्व स्नुखुकञ् ॥ ५५ ॥ सुभगादिषु अच्च्यन्तेषु च्व्यर्थे वर्तमानेषु वाप्सु भुवः स्नुखुकञौ स्तः । असुभगः सुभगो भवति सुभगंभविष्णुः । सुभगंभावुकः । आढ्यंभविष्णुः । आढ्यंभावुकः । स्थूलंभविष्णुः । स्थूलंभावुकः । पलितंभविष्णुः । पलितंभावुकः । नग्नंभविष्णुः । नग्नंभावुकः । अन्धंभविष्णुः । अन्धंभावुकः । प्रियंभविष्णुः । प्रियंभावुकः । अच्वाविति किं ? सुभगीभविता । सुभगीभावुकः ।

* कृञः करणे खनट् ॥ ५६ ॥ सुभगादिषु अच्व्यन्तेषु च्व्यर्थे वर्तमानेषु वाप्सु कृञः खनट् स्यात् करणे कारके । असुभगं सुभगं कुर्वन्त्यनेन सुभगंकरणं । आढ्यंकरणं । स्थूलंकरणं । पलितंकरणं । नग्नंकरणं । अन्धंकरणं । प्रियंकरणं ।

* भावे चाशितंभवः ॥ ५७ ॥ आशितंभवो निपात्यते भावे करणे च । आशितस्य भवनं आशितंभवं । आशितो भवत्यनेनेति आशितंभवः ओदनः । आशिते वाचि भुवः खच् ।

+ गमेः खड्डखड्डुः ॥ ५८ ॥ सुपि वाचि गमेः खच् खड् डश्च स्यात् । तुरो गच्छति तुरंगमः । तुरंगः । तुरगः । पतंगः । पतगः । पारगः । अध्वगः । अग्रगः । दूरगः । सर्वगः । गुरुतल्पगः । अनन्तगः ।

+ विहायसो विह च ॥ ५९ ॥ विहायसो विहादेशः स्यात् गमेः खच् खड्डश्च डुः । विहायसा गच्छतीति विहंगमः । विहगः ।

+ सुदुरोऽनाधारे डः ॥ ६० ॥ सुदुरोर्वाचोर्गमेर्डो भवति आधारे कारके । सुखेन गम्यतेऽस्मिन्निति सुगः पन्थाः । दुर्गो गिरिः ।

+ निसि देशे ॥ ६१ ॥ निसि वाचि गमेर्डो भवति देशे गम्यमाने । निर्गम्यतेऽस्मिन्निति निर्गो देशः ।

* सुप्तामीप्ये ॥ ८२ ॥ सुपि वाचि णोर्णिन् स्यात् व्रते आभीक्ष्ण्ये च गम्यमाने । पार्श्वेन शेते इत्येवं व्रतमस्य पार्श्वशायी । श्मशानवासी । आतप स्थायी । पुनः पुनः क्षीरं पिबतीति क्षीरपायिणोऽ स्रा । कषायपायिणो गान्धाराः । सुरापायिणः प्राच्याः ।

* मन्यात् ॥ ८३ ॥ सुपि वाचि णोर्मन्यतेः णिन् भवति । शोभनमानी । पटुमानी ।

* खश् स्वस्य ॥ ८४ ॥ स्वस्यात्मनः सुपि वाचि मन्यतेः खश् स्यात् णिन् च । पण्डितमात्मानं मन्यते पण्डितंमन्यः । पण्डितमानी । सर्वज्ञंमन्यः । सर्वज्ञमानी ।

* भ्यमी भ्वो भूते ॥ ८५ ॥ भ्यमोर्वाचो भेवतेर्णिन् स्यात् भूतेऽतीतेऽर्थे वर्तमानात् । विभूतमान् विभावी । अभिभावी । भूत इति किं ? विभवति ।

करणे यज ॥ ८६ ॥ करणे कारके वाचि यजेर्णिन् भवति भूतेऽर्थे । अग्निष्टोमेन इष्टवान्—अग्निष्टोमयाजी । वाजपेययाजी । राजसूययाजी ।

* कर्मणि घ्न कुत्स्य ॥ ८७ ॥ कर्मणि वाचि हन्तेर्भूतेऽर्थे णिन् स्यात् कुत्स्यश्चेत् कर्ता । पितरं हतवान् पितृघाती । मातृघाती । पितृव्यघाती । मातुलघाती । कुत्स्य इति किं ? चौरं हतवान् ।

* इन् विक्रय ॥ ८८ ॥ कर्मणि वाचि विक्रीणः इन् स्यात् भूतेऽर्थे कुत्स्यश्चेत् कर्ता । तैलं विक्रीतवान् तैलविक्रयी । सोमविक्रयी । कुत्स इति किं ? धान्यविक्राय ।

* ब्रह्मभ्रूणवृत्रे क्विप् घ्न ॥ ८९ ॥ ब्रह्मादिषु वाक्षु हन्तेः क्विप् स्यात् भूते । ब्रह्माणं हतवान् ब्रह्महा । भ्रूणहा । वृत्रहा । नियमोऽयं । ब्रह्मादिषु भूते क्विबेव नान्य । ब्रह्मादिषु एव हन्ते क्विबिति द्विधा नियम । मित्रं हतवान् ।

सुकर्मपापमन्त्रपुण्ये कृ ॥ ९० ॥ एषु वाक्षु कृञः क्विप् भवति भूते काले । सुष्ठु कृतवान् सुकृत् । कर्मकृत् । पापकृत् । मन्त्रकृत् । पुण्यकृत् । अयमपि नियमः—स्वादिष्वेव कृञः क्विप् नान्यस्मिन् । सूत्रकार ।

सोमे सो ॥ ९१ ॥ सोमे वाचि सुञः क्विप् स्यात् । सोमं सुतवान् सोमसुत् । सोमसुतौ । सोमसुतः । अयमपि नियमः—सोमे एव सुञः क्विप् नान्यस्मिन् । सुरासावः ।

अग्नौ चे ॥ ९२ ॥ अग्नौ वाचि चिञः क्विप् भवति । अग्निं चितवान् अग्निचित् । अग्निचितौ । अग्निचितः । अयमपि नियमः—अग्नावेव चिञः क्विप् नान्यत्र । कुड्यचाय ।

* कर्मण्यग्न्यर्थे ॥ ९३ ॥ कर्मणि वाचि चिनोतेर्भूते कर्मणि कारके क्विप् भवत्यग्न्यर्थेऽभिधेये । श्येन इव चित श्येनचित् । कङ्कचित् । रथचक्रचित् ।

दृशे क्वनिप् ॥ ९४ ॥ कर्मणि वाचि दृशेः क्वनिप् स्यात् भूते काले । विश्वं दृष्टवान् विश्वदृश्वा । मेरुदृश्वा । सर्वदृश्वा ।

* राजसहे युधिकृञो ॥ ९५ ॥ राज्ञि सहे च वाचि युधिकृञ्भ्यां क्वनिप् स्यात् । राजानं योधितवान्—राजयुध्वा । राजकृत्वा । सह युद्धवान्—सहयुध्वा । सहकृत्वा ।

+ अनोऽमो ड ॥ ९६ ॥ अनौ वाचि जनेर्डो भवति । पुमांसमनुजाता पुमनुजा स्त्री । स्त्र्यनुजः । अनुजः ।

+ ईपि ॥ ९७ ॥ ईबन्ते वाचि जनेर्ड स्यात् । मन्दुरायां जातः मन्दुरजः । अप्सुजः । सरसीजः । जलजः । वनजः ।

+ कायामजातौ ॥ ९८ ॥ कति जाति- वर्जिते वाचि जनेर्ड स्यात् । आत्मनो जातं आत्मजं दुःखं । संतोषजं सुखं । संकल्पजः कामः । अजाताविति किं ? अश्वाज्जातः ।

+ क्वचित् ॥ ९९ ॥ क्वचिदन्यस्मिन् वाचि जनेर्डो भवति । द्विर्जातः—द्विजः । भौम्यो जात भौजमन्नं । ऋषिजं सुखं । ब्राह्मणजः पशुवधः । अजः । प्रजाः । भुजः । केशजाः । क्वचिन्न स्यात्—गृहस्थो जातः । क्वचिदन्यतः—मातीति मं । भवतीति भः । कायतीति कः । कम्पते इति कं । भवतीति भः ।

लट् ॥ ११७ ॥ पुराशब्दे चापि भूतेऽनद्यतनेऽर्थे वर्तमानाल्लट् भवति । वसंतीह पुरा छात्रा ।

स्म ॥ ११८ ॥ स्मे चापि भूतानद्यतनेऽर्थे धोर्लट् स्यात् । पृच्छति स्म सुप्रमार्थं पुरा युध्यते स्म विद्याधरा । सुलोचनार्थं युध्यते स्म पार्थिवा ।

+ ननौ पृष्टोक्तौ ॥ ११९ ॥ पृष्टस्योक्तौ प्रतिवचने भूतेऽर्थे वर्तमानाद्धोर्ननौ चापि लट् स्यात् । किमकार्षीः कटं देवदत्त ? । ननु करोमि भो । किमवोचः किंचित्पुत्र ? । ननु ब्रवीमि ।

सति ॥ १२० ॥ सति संप्रतिकाले धोर्लट् भवति । भवति । नयति । तरति । पद्मप्रभ नाथ स्तौमि ।

पूङ्यजो शान ॥ १२१ ॥ पूङ्यजभ्यां धो शानो भवति । पवमान । यजमान ।

वय:शक्तिशीले ॥ १२२ ॥ एष्वर्थेषु धो शान स्यात् सति काले । कति कवचं पर्यस्यमाना । कति कं निघ्नाना । कतीह पचमानाः । कतीह समश्नाना । कतीह मंडयमाना । कतीह जानाना ।

धारीङः शत्रकृच्छ्रे ॥१२३॥ सति काले धारीङ्भ्यां शतृ इत्ययं धो भवत्यकृच्छ्रे सुखसाध्ये । धारयन् सर्वशास्त्राणि अधीयन् जैनेंद्र । अकृच्छ्र इति किं ? कृच्छ्रेण धारयति । कृच्छ्रेणाधीते ।

✽सुञ्यज्ञिपर्हः सत्र्यारिस्तुत्ये ॥ १२४ ॥ एभ्य सत्र्यादिष्वर्थेषु सद् इति स स्यात् । सर्वे सुन्वतः सत्रिणः यजमाना । द्विषन् शत्रु । अर्हन् मित्रं । सुरां सुन्वति । द्वेष्टि भार्यां पति । चौरो वधमर्हत्ययम् ।

✽शीलधर्मसाधौ तृन् ॥ १२५ ॥ एष्वर्थेषु धोस्तृन् भवति सति काले । करणशीलः कर्ता कटान् । वदिता जनापवादान् । मुंडनधर्माणः—वधूमुखं मुंडयितारः श्राविष्ठायना भवति । अत्रे सिद्धममपहर्तार आह्वरका भवति । साधु गन्ता—गंतेति गता खेलं । साधुगंतेत्यर्थः ।

✽भ्राज्यलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुः ॥१२६॥ सति काले भ्रादिभ्य इष्णुर्भवति शीलाद्यर्थे । भव नशील भवनधर्मा साधु वा भवतीति भविष्णु । एवं—भ्राजिष्णु । अलंकरिष्णुः । निराकरिष्णु । प्रजनिष्णु । उत्पचिष्णु । उत्पतिष्णु । उन्मदिष्णु । रोचिष्णु । अपत्रपिष्णु । वर्तिष्णु । वर्धिष्णु । सहिष्णु । चरिष्णु ।

ग्लाजिस्थो ग्स्नु ॥ १२७ ॥ एभ्य शीलादौ सति काले ग्स्नुर्भवति । ग्लास्नु । भूष्णुः । जिष्णुः । स्थास्नु ।

त्रसगृधधृषक्षिप क्नु ॥ १२८॥ त्रसादेः क्नुः स्यात् । त्रस्नु । गृध्नु । धृष्णु । क्षिप्नु ।

✽शम्यो घिनिण ॥ १२९ ॥ शमादिभ्योऽष्टभ्य शीलादौ सत्यर्थे घिनिण स्यात् । शमी । दमी । तमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी ।

युजभुजद्विषद्रुहदुषत्यजरञ्जभजाभ्याहन ॥ १३० ॥ एभ्यो घिनिण स्यात् शीलादौ । द्रोही । अनुरोधी । दोषी । द्वेषी । द्रोही । योगी । त्यागी । रागी । भागी । अभ्याघाती ।

आङि यम्यसक्रीडमुष' ॥ १३१ ॥ यमादेराङ्पूर्वाद् घिनिण स्यात् शीलादौ सत्यर्थे । आयामी । आयासी । आक्रीडी । आमोषी ।

वौ कषिलसकत्थस्रंभ ॥ १३२ ॥ वौ चापि कषादेः घिनिण भवति । विकाषी । विलासी । विकत्थी । विस्रंभी ।

✽लपोऽपे च ॥ १३३ ॥ अपे वौ च चापि शीलादौ सत्यर्थे लपेर्घिनिण स्यात् । अपलापी । विलापी ।

✽चरोऽतौ च ॥ १३४ ॥ अतौ अपे च चापि चरेर्घिनिण स्यात् । अतिचारी । अपचारी ।

✽प्रे लपसृद्रुमथ ॥ १३५ ॥ प्रे चापि लपादेर्घिनिण स्यात् । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी ।

✽वदसृ ॥ १३६ ॥ प्रे चापि वदिसृभ्यां घिनिण भवति । प्रवादी । प्रसारी ।

✽परौ दहमुह ॥ १३७ ॥ परौ चापि दहिमुहिभ्यां वदसृभ्यां च घिनिण भवति । परिदाही । परिमोही । परिवादी । परिसारी ।

गत्वर ॥ १६० ॥ गमस्त्वरप मत्वं च निपात्यं । गत्वरः । गत्वरी ।

नपुर्भासिस्म्यमस्कमृहिंसदीपो र ॥१६१॥ एभ्यो रो भवति शीलाद्यौ सत्यर्थे । नम्रं मुखं । कम्प्रा शाखा । स्मेरं मुखं । अजस्रं तस्य मावयामः । कम्रा स्त्री । हिंस्र पापमतिः । दीप्रं प्रदीपः ।

* सन्भिक्षाशंसिविदिच्छादु ॥ १६२ ॥ सन्नन्तात् भिक्षादेश्च उर्भवति । चिकीर्षु । बुभुत्सुः । मुमुक्षुः । बीभत्सुः । भिक्षुः । आशंसुः । विंदुः । इच्छुः । वेत्तुमुम् । इच्छतेरेषु त्र निपात्यं ।

* स्वप्तृष्णूधृषो नज् ॥ १६३ ॥ स्वपते नज् भवति शीलाद्यौ सत्यर्थे । स्वप्नक् । स्वप्नजौ । स्वप्नजः । तृष्णक् । धृष्णक् ।

शृवंदारारु ॥ १६४ ॥ आभ्यामारु स्यात् । शरारुः । वंदारुर्जिनान् ।

भ्य कुकुको ॥ १६५ ॥ बिभेतेः कु को स्तः । भीरु । भीरुकः । भीलुकः ।

स्थेशभासपिसकसो वरः ॥ १६६ ॥ स्थादेर्वरो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ।

यो यङ ॥ १६७ ॥ यातेर्यङन्तात् वरः स्यात् । यायावरः ।

+ सहवहचलपतेरिः ॥ १६८ ॥ सहादेर्यङन्तात् इर्भवति । सासहिः । वावहिः । चाचलिः । पापतिः ।

+ धाङ्कुसृजनगमेः किर्लिट् च ॥१६९॥ एभ्यः शीलादौ किर्भवति स च लिड्वत् । दधिः । चक्रिः । ससिः । जज्ञिः । नेमिः । चकारात् शीलार्थे उत्तरत्र नानुवर्तते ।

* सविमात् भ्वोऽसंज्ञो डु ॥ १७० ॥ समादिपूर्वात् भुवः सम्पर्ये डुर्भवत्यसंज्ञो । संभवतीति संभुः अनित्यः । विभुः सर्वगतः । प्रभुः स्वामी । असंज्ञाविति किं । विभूर्नाम कश्चित् ।

- * मितद्र्वादयः ॥१७१ ॥ एते डुमन्ता मि पात्यन्ते । मितं द्रवतीति मितद्रुः । शंभुः । स्वयंभुः ।

* इत्र्प्वो दैवते ॥ १७२ ॥ दैवतेऽर्थे पुवः इत्रो भवति । पवित्रोऽर्हन् स मां पुनातु ।

* ऋषौ करणे ॥ १७३ ॥ पुवः करणे कारके इत्रः स्यात् स्रो कर्तौ चाभिधेये । पूयतेऽनेनेति पवित्रो दर्भः । पवित्रोऽयमृषिः ।

* लूधूसूखनचरसहचरः ॥ १७४ ॥ एभ्यः करणे इत्रः स्यात् । लुनाति तेनेति लवित्रं । धवित्रं । सवित्रं । खनित्रं । चरित्रं । सहित्रं । चरित्रं ।

* व्यधाद्रोर्घन ॥ १७५ ॥ व्यात्भ्य इतेर्घनो निपात्यः । विहन्यतेऽनेनेति विघनः । अयोघनः । द्रुघनः ।

* स्तंबाद् घ्नश्च ॥ १७६ ॥ स्तंबात् घ्नः घनश्च निपात्यः । स्तंबो हन्यतेऽनेनेति स्तंबघ्नः । स्तंबघनः ।

* वहपरिघं ॥ १७७ ॥ वहपरिघमस्मौ निपात्येते । वहति अमनेनेति वहं शकटं । वहेर्यः । परिहन्यतेऽनेनेति परिघः । हनेर्डत्वघौ निपात्यौ ।

प्वो हलाकाशस्ये इत्र् ॥ १७८ ॥ पुवः इत्र् भवति हलस्य अक्षस्य च करणे । हलस्य पोत्रं । क्रोडस्य पोत्रं । तत्मुखमित्यर्थः ।

* दाम्नीशसयुयुजस्तुतुसिसिचमिहपतदंशनहस्रोः ॥ १७९ ॥ एभ्य करणे सति कालेत्रट् स्यात् । दाति तेन दात्रं । नेत्रं । शस्त्रं । योत्रं । योक्त्रं । स्तोत्रं । तोत्रं । सेत्रं । सेक्त्रं । पत्रं । दंष्ट्रा । मेढ्रं । नद्ध्री । स्तात्रं ।

* धात्री ॥ १८० ॥ धेटः धाञश्च कर्मणि त्रट् निपात्यते । धयति दधाति तामिति धात्री स्तन दायिनी आमलकी च ।

* क्तीन्मत्यर्थार्थेभ्यः शीस्यादिभ्यश्च ॥१८१॥ अतीत्यर्थ मत्यर्थेभ्योऽर्थार्थेभ्यः शीस्यादिभ्यश्च सति काले क्तो भवति । मिमिक्षा–मिक्ष । मिमृषा–मृष । राज्ञां मतः । राज्ञां बुद्धः । राज्ञामिष्टः । राज्ञां ज्ञातः । सतामर्चितः । सतां पूजितः । शीलितः । रक्षितः । क्षांतः ।

१ पञ्चमि भवतिर्वैरेषु कौतस्कर्तार्थे ।

उणादयो बहुलं ॥ १८२ ॥ उण् इत्य-
वमादयस्त्याः सति काले बहुलं भवंति । छापा-
जिमिस्वदिसाध्यशूभ्य उण् । कारु । वायु । पायुः ।
जायुः । मायुः । स्वादुः । साधुः । आशुः । कचि-
दन्येऽन्यतोऽपि दृश्यन्ते । जरंडः । करंडः ।
ऋषिः । एरंड । सरुः । क्वचिद् भूतेऽपि ।
चरितोऽसौ चरिः । ततोऽसौ तनिः । ममितं-
भस्म । चरिभ तत्र—चर्म । वृत्त मत्र—वर्त्म ।

इति जैनेन्द्रव्याकरणे अभयनन्दिविरचितायां
महावृत्तौ द्वितीयाध्यायस्य द्वितीयपादः ।

---

तृतीय पादः ।

—:०:—

गम्यादिर्भविष्यति ॥ ॥ १ ॥ गम्यादय
शब्दाः भविष्यति काले साधवो भवंति । गमिष्यतीति
गमी ग्रामं । आगामी नगरं । प्रस्थायी । भावी ।

लृट् ॥ २ ॥ भविष्यदर्थे धोर्लृट् स्यात् ।
करिष्यति । हरिष्यति । पक्ष्यते । भर्त्स्यते ।

* शोकानद्यतने लुट् ॥ ३ ॥ शेषेऽनद्यतने
भविष्यति धोर्लुट् स्यात् । इयं कदा गंता । पैवं पाठी
जिष्यति । अयं तु कदाऽध्येता य एवमनाभियु
क्तः । श्वः कर्ता । श्वोऽध्येता ।

पुरायावतोर्लट् ॥ ४ ॥ एतयोर्वा धोर्लट्
भवति भविष्यदर्थे । पुराधीते । यावदधीते । पुरा
भुंक्ते । यावत् भुंक्ते ।

वा कदाकर्ह्योः ॥ ५ ॥ कदा कर्हि इत्येत-
योर्वोपपदयोर्वा लट् स्यात् । कदा भुंक्ते । कदा भोक्ष्यते ।
कदा भोक्ता । कर्हि भुंक्ते । कर्हि भोक्ष्यते ।
कर्हि भोक्ता ।

* किंवृत्तेऽर्थिन्य ॥ ६ ॥ किंवृत्ते चापि
भविष्यति काले वा लट् भवत्यर्थिनि गम्यमाने ।
को भवद्भ्यो भिक्षां ददाति दास्यति दाता वा ।
क भवतो भोजयति भोजयिष्यति भोजयिता
वा । स्वयं कम्बुमिच्छुरेवं पृच्छति । अर्थिन्य इति
किं ? का स्कंधावारं यास्यति ।

लिप्स्यसिद्धौ ॥ ७ ॥ लिप्स्यसिद्ध्यर्थे वा
लट् स्यात् । यो भवद्भ्यो दानं ददाति दास्यति
दाता वा । स स्वर्गलोकं गच्छति, गमिष्यति
गंता वा ।

* लोडर्थे हेतौ ॥ ८ लोडर्थे लोडन्ते चापि लोटः
प्रत्यासत्त्या लोडर्थस्य प्रैषादेर्हेतौ निमित्ते भविष्यति
काले वा लट् स्यात् । उपाध्यायश्चेदागच्छति, आ-
गमिष्यति आगंता वा । अथ त्वं जैनेन्द्रमधीष्व ।
तर्कमधीष्व ।

लिङ् चोर्ध्वमौहूर्तिके ॥ ९ ॥ लोटि लो-
डर्थे चापि लोटः प्रत्यासत्त्या लोडर्थस्य प्रैषादेर्हेतौ
निमित्ते ऊर्ध्वे मौहूर्तिके भविष्यति काले लिङ् स्यात्
लट् च वा । ऊर्ध्वमुहूर्तात् उपरि मुहूर्तस्य उपाध्या-
यश्चेदागच्छेत्, आगच्छति आगमिष्यति, आगंता ।
अथ त्वं सूत्रमधीष्व गणितमधीष्व ।

तुमुण्ण्वुल्लृट् क्रियायां तदर्थायां ॥ १० ॥
क्रियार्थायां क्रियायां चापि भविष्यति तुमुण्ण्वुलौ
भवंति । कारको व्रजति । कर्तुं व्रजति । करिष्यामीति
व्रजति । पाचको व्रजति । पक्तुं व्रजति । पक्ष्या-
मीति व्रजति । क्रियायामिति किं ? भरण्ये इत्यस्य
कर्मवधः । भिक्षिष्ये इत्यस्य जटाः । तदर्थायामिति
किं ? धावतस्ते दंडः पतिष्यति ।

कर्मणि चाण् ॥ ११ ॥ कर्मणि चापि
क्रियायां तदर्थायां च धोरण् भवति । कुंभकारो व्रजति ।
गोदायो व्रजति । सुरापायो व्रजति ।

* लृटो वाऽनितौ शतृशानौ ॥ १२ ॥
भविष्यति यो लृट् तस्य स्थाने शतृशानौ वा स्तो
अनितो परे । पक्ष्यन् । पक्ष्यमाणः । पक्ष्यति ।
अनितावितिकिं ? पक्ष्यामीति व्रजति । करिष्या-
मीति व्रजति ।

* सत्सलट् ॥ १३ ॥ सति संप्रति काले यो
लट् तस्य शतृशानौ वाऽनितौ स्तः । पचन् ।
पचमानः । पचति । यान् याति । शयानः । शेते ।

माङ्याक्रोशे ॥ १४ ॥ माङि चाप्याक्रोशे
गम्यमाने लटः शतृशानौ स्तः । मा पचन् । मा
पचमानः ।

१ पूर्वेण इत्यस्यैः प्रत्यासत्त्या... [illegible]
... [illegible] ।

सौ सत् ॥ १९ ॥ सौ शत्रुशानौ सत् संज्ञौ स्तः। पचन्। पचमानः। पुत्रस्य कुर्वन्। पुत्रस्य कुर्वाणः।

॰पद्रुजो पद्र ॥ १६ ॥ आभ्यां घञ् स्यात्, पद्यतेऽसौ पादः। रुजत्यसौ रोगः।

॰सृ स्थिरव्याधिमत्स्यबले ॥ १७ ॥ सरतेः स्थिरादिषु कर्तृषु घञ् स्यात्। चंदनसारः। अतीसारो व्याधिः। विसारो मत्स्यः। सारं बलं। एष्विति किं? सर्त्ता। सारकः।

+ भावे ॥ १८ ॥ भावे धोर्घञ् भवति। पाकः। रागः।

अकर्तरि ॥ १९ ॥ कर्तृवर्जिते कारके घञ् स्यात्। प्रकुर्वन्ति तमिति प्राकारः। दास्यतेऽस्मै दासः। आहरंति तस्माद्दाहारः। अकर्तरीति किं? कारकः। कर्ता।

इङः ॥ २० ॥ इङो घञ् भवति भावेऽकर्तरि च। अधीयते इति अध्यायः। उपेत्याधीयतेऽस्मादुपाध्यायः।

गौ रो ॥ २१ ॥ गौ वाचि रौतेर्घञ् भवति। सुरावः। सुराव। संरावः। विरावः। गाविति किं? रवः।

समि युद्रुदो ॥ २२ ॥ समि वाच्येभ्यो घञ् स्यात् भावेऽकर्तरि। संयावः। संद्रावः। संद्रावः। समीति किं? उपद्रवः।

॰स्तोर्यज्ञे ॥ २३ ॥ संपूर्वात् स्तौतेर्घञ् स्यात् यज्ञविषये। संस्तुवंत्यस्मिन्-संस्तावः छन्दोगानां। संस्तवः सताम्न्यत्र।

॰भिम्बोऽप्रौ ॥ २४ ॥ अगौ वाचि भिभूभ्यां घञ् स्यात्। भायः। भावः। अगाविति किं? प्रभयः। प्रभवः।

॰निरभ्यथे पूलव्यः ॥ २५ ॥ एषु वाक्षु भ्यादिभ्यो घञ् स्यात् भावे कर्तरि। निष्पावः। अभिलावः। अभवनाम। पवः-लवः, नयोऽन्यत्र।

प्रे द्रुस्तुभो ॥ २६ ॥ प्रे वाच्येभ्यो घञ् स्यात्। प्रद्रावः। प्रस्तावः। प्रभावः।

स्त्रोऽयज्ञे ॥ २७ ॥ प्रे वाचि स्तृणातेर्घञ् भवत्ययज्ञे। शंखप्रस्तारः। विमानप्रस्तारः। बर्हिःप्रस्तरोऽन्यः।

॰वौ प्रथनेऽशब्दे ॥ २८ ॥ वौ वाचि स्तृणातेः प्रथने विस्तीर्णतायां भावेऽकर्तरि घञ् भवत्यशब्दे। पटस्य विस्तारः। गृहस्य विस्तारः। प्रथने इति किं? विस्तरः। तृणस्याच्छादनमित्यर्थः। अशब्द इति किं? वाक्यविस्तरः।

स्रुभ्रो ॥ २९ ॥ वौ वाचि स्रुभ्रुभ्यां घञ् स्यात्। विस्रावः। विभ्रमः।

॰न्युदि ग्रः ॥ ३० ॥ न्युदोर्वाचोर्गृणातेः घञ् स्यात् भावेऽकर्तरि। निगारः। उद्गारः। न्युदीति किं? संगरः।

क्रो धान्ये ॥ ३१ ॥ न्युदि वाचि किरतेर्धान्यविषये घञ् स्यात् भावेऽकर्तरि। धान्यस्य निकारः। उत्कारः। फलनिकरोऽन्यः।

॰वृणो ॥ ३२ ॥ नौ वाचि वृणोतेः घञ् स्यात् धान्ये। नीवारा नाम व्रीहयः।

॰इणोऽभ्रेषे ॥ ३३ ॥ निपूर्वादिणोऽभ्रेषे युक्तकरणे घञ् स्यात् भावेऽकर्तरि। एषोऽत्र न्यायः। अभ्रेष इति किं? न्ययं गतश्चौरः।

॰परौ क्रमे ॥ ३४ ॥ परौ वाचीणः क्रमेऽर्थे घञ् स्यात्। तव पर्यायो भोक्तुं। मम पर्यायो भोक्तुं। पर्ययोऽन्यत्र।

॰व्युपे शयः ॥ ३५ ॥ व्युपाभ्यां शीङः घञ् स्यात् क्रमे। तव विशायः। मम विशायः। तव राजोपशायः। मम राजोपशायः।

॰हस्तादेयेऽनुपस्तेये चेः ॥ ३६ ॥ हस्तादेये हस्तेनादानेऽनुदि वाचि चिञः घञ् भवत्यस्तेये। पुष्पप्रचायः। हस्तादेय इति किं? पुष्पप्रचयं करोति तरुशिखरे। अनुदीति किं? फलोच्चयः। अस्तेय इति किं? फलप्रचयं करोति चौर्येण।

॰चित्याधारार्त्तोपसमाधौ च कः ॥ ३७ ॥ चित्यादिष्वर्थेषु चेर्घञ् स्यात् चकारस्य च ककारादेशः। आकायमग्निं चिन्वीत। मुनिनिकायः।

जलबुद्बुदधर्माणः कायाः । महान् गोम्मनिकायः । कायोऽन्यत्र ।

संघेऽनूर्ध्वे ॥ ३८ ॥ संघे प्राणिविशेषसमुदाये चेर्घञ् स्यात् यस्य च को भवत्यनूर्ध्वे । वैयाकरणनिकायः । देवनिकायः । संघ इति किं ? सार समुच्चयः । अनूर्ध्वे इति किं ? उपर्युपरि सूकरनिचयः ।

+ भो वायुवर्णनिवृते ॥ ३९ ॥ एष्वर्थेषु शृणातेर्घञ् भवति । शारो वायुर्वर्णो निवृतं च । शरोऽन्यः ।

* माने ॥ ४० ॥ माने इयत्तायां गम्यमानायां नीरकर्तरि घञ् भवति । एको निष्पावः । द्वौ केदारकौ । क्वचः कारः ।

* उदि पूयुद्रो ॥ ४१ ॥ उदि वाचि एभ्यो घञ् भवति । उत्पावः । उद्यावः । उद्रावः ।

ग्रहः ॥ ४२ ॥ उदि वाचि ग्रहेर्घञ् भवति । उद्ग्राहः । उदीति किं ? विग्रहः ।

समि मुष्टौ ॥ ४३ ॥ समि वाचि ग्रहेर्घञ् स्यात् मुष्ट्यर्थे । अहो मल्लस्य संग्राहः । मौष्टिकस्य संग्राहः । मुष्टाविति किं ? संग्रहः शास्त्रस्य ।

* शापे न्यव ॥ ४४ ॥ न्यवयोर्वाचोर्ग्रहेरकर्तरि घञ् स्यात् शापे आक्रोशे गम्यमाने । निग्राहस्ते जाल्म भूयात् । अवग्राहोऽस्तु ते जाल्म भूयात् । शापे इति किं ? निग्रहश्चौरस्य ।

प्रे लिप्सायां ॥ ४५ ॥ प्रे वाचि ग्रहेर्घञ् स्यात् लिप्सायां । पात्रप्रग्राहेण चरति भिक्षुश्चार्थी । लिप्सायामिति किं ? प्रग्रहः ।

परौ यज्ञे ॥ ४६ ॥ परौ वाचि यज्ञेऽभिधेये ग्रहेर्घञ् स्यात् । उत्तरपरिग्राहः । अधरपरिग्राहः । परिग्रहोऽन्यः ।

* वाऽस्य वर्षे ॥ ४७ ॥ अव वाचि ग्रहेर्घञ् स्याद् वर्षविषये । अवग्राहः । अवग्रहः । वृष्टेः प्रतिबन्ध इत्यर्थः । अवग्रहः पदस्यान्यत्र ।

* प्र तुलायामाघूत्रे ॥ ४८ ॥ प्रे वाचि ग्रहेर्घञ् भवति वा तुलासूत्रे तुलासूत्रे चाभिधेये । प्रग्राहः । प्रग्रहः । अश्वादीनां संयमनरज्जुः वणिजां तुलासूत्रं चोच्यते ।

* वृणोतेः ॥ ४९ ॥ प्रे वाचि वृणोतेरकर्तरि घञ् वा स्यात् वस्त्रेऽभिधेये । प्रावारः । प्रवरः ।

* उद्युश्रोः ॥ ५० ॥ आभ्यां घञ् वा स्यात् । उत्तायः । उत्तयः । उच्छ्रायः । उच्छ्रयः ।

आङि ह्रुप्लुवः ॥ ५१ ॥ आङि वाचि एभ्यां घञ् वा स्यात् । आरावः । आरवः । आप्लावः । आप्लवः ।

परौ भ्वोऽवज्ञाने ॥ ५२ ॥ परौ वाचि भवतेरवज्ञाने घञ् वा स्यात् । परिभावः । परिभवो देवदत्तस्य ।

* न्यो यत्ते ॥ ५३ ॥ परौ वाचि नयतेर्धूत विषयेऽकर्तरि घञ् वा स्यात् । परिणायेन शारान् हन्ति । परिणयः कन्यायाः । अन्यत्र–परिणयः ।

* ग्रहवृदृनिश्चिगमश्च ॥ ५४ ॥ इवर्णान्तादुवर्णान्तात् ऋदन्तात् ग्रहादेश्च भावेऽकर्तरि अप् भवति । चयः । क्षयः । जयः । भवः । लवः । यवः । तरः । शरः । करः । गरः । ग्रहः । वरः । आदरः । आगमः । वशः । रणः ।

गावद् ॥ ५५ ॥ गौ वाच्यदेरप् भवति । प्रघसः । विघसः । परिघसः । संघसः । गाविति किं ? घासः ।

नौ णश्च ॥ ५६ ॥ नौ वाच्यदेर्भावेऽकर्तरि णो भवत्यप् च । न्यादः । निघसः ।

* सुपणक्वणरणः प्रजनेयसारे ॥ ५७ ॥ एभ्यो यथासंख्यं प्रजनादिविषये अप् भवति । गवामुपसरः । शाकुरणः । मृगक्वणो गानिनदीनां तत्सम्यव्यवहारार्थ मुष्टिरित्यर्थः । स्वनः । अन्यत्र–उपसारः पाणः, क्वाणः ।

* समुदोरज पशौ ॥ ५८ ॥ समुदोर्वाचोरजेर्भावेऽकर्तरि अप् स्यात् पशुविषये । समजः पशूनां समुदाय इत्यर्थः । उदजः पशूनां प्रेरणमित्यर्थः । पशाविति किं ? समाजः उदाजः साधूनां ।

* विन्यभ्युप हा पचा ॥ ५९ ॥ एभ्यां वाचि ह्वयतेरप् स्यात्, बाहुलकात्सम्प्रसारणञ्च । निहवः । विहवः । आभिहवः । उपहवः ।

आङ्याम्नी ॥ ६० ॥ आङि वाचि ह्वेञो ऽञ् भवति भयोश्च आवो युद्धविषयं । आहूयन्ति- ऽस्मिन् परस्परमिति आहवो रामस्य । आह्वायोऽन्यः ।

निपानमाहावः ॥ ६१ ॥ आहाव इति निपात्यते निपाने जलस्थानेऽर्थे । आहूयतेऽस्मिन् पशवः पानायेत्याहावः पशूनां । आह्वयतेनम् भयोश्च ।

भावेऽनौ ॥ ६२ ॥ अगौ वाचि ह्वेञोऽञ् स्यात् भावे भयोश्च । ह्वान-हवः ।

हनश्च वधः ॥६३॥ हन्तेर्भावेऽगौ अञ् भवति वधादेशश्च । हननं-वधः । चकारात् घञपि-घातः ।

* मदस्वप्नपोऽनौ ॥ ६४ ॥ अगौ वाचि मदादेरञ् स्यात् भावेऽकर्तरि । मदः । जपः । व्ययः । अगाविति किं ? उन्मादः ।

* हस्वस्वनप्यो वा ॥६५॥ अगौ वाचि एभ्यो भावेऽकर्तरि अञ् वा स्यात् । हसः । हासः । स्वनः । स्वानः । क्वणः । क्वाणः । नयः । नायः ।

यमः सम्निव्युपे च ॥६६॥ समादौ अगौ च वाचि यमेरञ् स्यात् । संयमः । संयामः । नियमः । नियामः । वियमः । वियामः । उपयमः । उपयामः । यमः । यामः ।

* नौ स्वनगदनदपठः ॥ ६७ ॥ नौ वाच्येभ्यो भावेऽकर्तरि अञ् स्याद्वा । निस्वनः । निस्वानः । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः ।

* क्वणः ॥ ६८ ॥ नौ वाचि क्वणेर्भावेऽकर्तरि वाऽञ् स्यात् । निक्वणः । निक्वाणः ।

* वैणे गौ ॥ ६९ ॥ वैणेऽर्थे गिपूर्वात् क्वणेर्वाऽञ् स्यात् । प्रक्वणः । प्रक्वाणः वीणायाः । प्रक्वणः शृङ्खलस्यान्यत्र ।

+ स्थादिभ्यः कः ॥ ७० ॥ स्थादिभ्यो भावेऽकर्तरि कस्यो भवति । प्रतिष्ठन्तेऽस्मिन् स प्रस्थः । सस्था । प्रपिबन्त्यस्यां प्रपा । विहन्यतेऽनेनेति विघ्नः ।

* घनान्तर्घणोद्घनापघनोपघ्नसंघोद्घनिर्घ मूर्तिदेशात्याधानाङ्गासन्नगणप्रशस्तनिमित्ते ॥ ७१ ॥ घनादयो निपात्यन्ते मूर्त्यादिषु अर्थेषु । दधिघनः । हन्तेरपि घनभावः काठिन्ये । अन्तर्घणो देशः । अन्तर्हन्यतेऽत्र घणोऽञ् । उद्धन्यतेऽस्मिन् उद्घनोऽत्याधानं । अपहन्यतेऽनेनेति-अपघनोऽङ्गं । गुरूपघ्नः । उपहते को प्रभावः आसन्ने । संघः । सह हन्तेरञ् घश्च गणे । उद्धन्यते उत्कर्षेण ज्ञायते उद्घः प्रशस्तः । हन्तेरञ् घश्च निमित्ते । निघा वृक्षाः । भावे च । अन्यत्रान्तर्घातः । उद्घातः । अपघातः । उपघातः । संघातः । उद्घातः । निघातः ।

* प्रघणप्रघाणौ कोष्ठस्थे ॥ ७२ ॥ एतौ कोष्ठांशे निपात्यौ । प्रघणः प्रघाणः । गृहद्वारैकदेशः । हन्तेरञि घणघाणौ निपात्यौ । प्रघातोऽन्यत्र ।

* प्रमदसमदौ हर्षे ॥ ७३ ॥ अञ् हर्षे अजन्तौ निपात्यौ । प्रमदः कन्यानां । संमदः कोकिलानां । अन्यत्र-प्रमादः । समादः ।

ड्वितः क्त्रिः ॥ ७४ ॥ ड्वित्संज्ञेभ्यो धोर्भावे कर्तरि क्त्रिर्भवति । पाकेन निर्वृत्तं पक्त्रिमं । उप्त्रिमं । कृत्रिमं । भित्त्रिमं ।

ट्वितोऽथुः ॥ ७५ ॥ ट्वित्संज्ञेभ्यो धोरथुः स्यात् । श्वयथुः । क्षवथुः । वेपथुः ।

* यजयाचयतविच्छप्रच्छरक्षप्रश्नो नङ् ॥७६॥ एभ्यो नङ् भवति भावेऽकर्तरि । यज्ञः । यत्नः । विश्नः । प्रश्नः । स्वप्नः । रक्ष्णः ।

* याच्ञा ॥ ७७ ॥ याचेः स्त्रियां नङ् निपात्यते । याच्ञा । स्त्रीलिङ्गादन्यत्र-याचित्रिमं ।

गौ घो किः ॥ ७८ ॥ गौ वाचि घुसंज्ञकेभ्यः किर्भवति । विधिः । निधिः । संधिः । व्याधिः । निदिः । प्रदिः । संदिः । आदिः ।

कर्मण्याधारे ॥ ७९ ॥ कर्मणि वाचि आधारे कारके किर्भवति घोः । जलं धीयतेऽस्मिन् जलधिः । इषुधिः । वालधिः ।

स्त्रियां क्तिः ॥ ८० ॥ स्त्रीलिङ्गे भावेऽकर्तरि वर्तमानाद्धोः क्तिर्भवति । ऋद्धिः । स्तुतिः । कृतिः । हृतिः । धृतिः ।

+ श्रमादिभ्यः ॥ ८१ ॥ एभ्यः स्त्रियां क्तिर्भवति । लब्धिः । प्राप्तिः । दीप्तिः ।

ण्का। विचार्चिका। एवं नामाना व्याधयः। शाल्म भ-ञ्यंत यस्यां क्रीडायां सा शाल्मभञ्जिका क्रीडा। वारण-पुष्पप्रचायिका। उद्दालकपुष्पभञ्जिका। अथारणा-दिका। शयन शायिका। आसिका। क्वचिन्न। शिरोर्ति। धन्नतका।

प्रश्नाख्याने ॥ १०६ ॥ घौ स्त्रियां मिञ् वा स्यात् ण्वुश्च। बाबचनात् यथाप्राप्तं च प्रश्ने आख्याने च प्रतिवचने गम्यमाने। कां त्व कारिमकार्षीः कां कारिकां कां क्रियां, कां कृत्यां, कां कृतिं। सर्वां मया कारिं, कृता। सर्वां कारिकां सर्वां क्रियां, सर्वां कृत्यां सर्वां कृतिं। कां त्वं पाठिमपाठीः, पाठिकां पठितिं। कां त्वं गणिमगणीः। कां गणिकां कां गणनां।

* पर्यायार्हर्णोत्पत्तौ ण्वुः ॥ १०७ ॥ एष्वर्थेषु ण्वुर्भवति धौ स्त्रियां निर्त्यं भावे। भवत शायिका। भवत आसिका। भवतोऽग्रे गामिका। आसनादौ क्रम इत्यर्थः। अर्हति भवानिक्षुभक्षिकां। ओदनभोजिकां। इक्षुभक्षिकां मे धारयसि। ओदन भोजिकां। पयः पायिकां। इक्षुभक्षिकां मे उदपादि। दुरुक्तकारिका। शीतपायिका

* नञ्यनिः शापे ॥ १०८ ॥ नञि वाचि धौ स्त्रियां भावऽकर्तरि अनिर्भवति शापे आक्रोशे गम्यमाने। अभवनिस्ते जाल्म भूयात्। अकरणिस्ते वृषल भूयात्। नञीति किं ? हृतिस्ते जाल्मास्तु। शाप इति किं ? अकृतिस्तस्य धनस्य।

* ल्यानट् बहुलं ॥ १०९ ॥ ल्यसंज्ञ अनट् च बहुलं भवति। भावकर्मणोर्ल्यान् च स्यति। ततोऽन्यत्राप्यपि स्युः। ज्ञानमावृणोति आव्रियतेऽनेनेति वा ज्ञानावरणीयं। दर्शनावरणीयं। वेदनीयं। मोहनीयं। स्नाति तेन-स्नानीयं चूर्णं। दीयतेऽस्मै दानीयोऽतिथिः। भावकरणाधारेष्वनट् स्यति। ततोऽन्यत्रापि स्यात्। निरदति तमिति निरदन। राजभोजनाः शाल्यः। संप्रदीयतऽस्मै संप्रदान। अपादीयतेऽस्मादित्यपादानं।

* नञ्भावे क्तोऽभ्यादिभ्यः ॥ ११० ॥ विभेत्यादिवर्जितात् घोर्नपि भावे क्तो भवति। हसितं छत्रस्य। शायनं। जल्पितं। आसितं। शयितं। अभ्यादिभ्य इति किं ? भयं। वर्ष।

* ञिम् व्याप्तौ ॥ १११ ॥ नञ्भावे ञिन् स्यात् धौ व्याप्तौ क्रियायां कार्त्स्न्येनाभिसंबंधे गम्यमाने। समन्ततः कुञ्ने सांकोटिनं। सांराविणं। सांमार्जिनं। व्याप्ताविति किं ? संकोटः।

* करणाधारे घानट् ॥ ११२ ॥ करणे आधारे नञ्भावे घाम्यादिभ्यो घुभ्योऽनट् स्यात्। वृश्च्यतेऽनेनेति वृश्चनः। इध्मवश्चनः। पलाशशातनः। दुह्यतेऽस्यामिति दोहनी। तिलपीडनी। राजधानी। हसनं। शोभनं छत्रस्य। आसनं। जल्पनं। शयन।

पुंसी घ प्रायः ॥ ११३ ॥ धौ पुल्लिंग-संज्ञायां करणाधारयोर्घो भवति प्रायः। प्रच्छाद्यते ऽनेनेति प्रच्छदः। दंतच्छदः। उरः। एत्य कुर्वंत स्मिन् इति-आकरः। आलयः। आपणः। पुंग्रहण किं ? प्रसाधनं। प्रायेति किं ? प्रहरणो दंडः। प्राय इति किं ? दोहनः। प्रसाधनः।

* गोचरसंचरवहव्रजव्यजसंक्रमापणखेलभगकषनिकषनिगमा ॥ ११४ ॥ एते करणाधारयोः घांता निपात्यते पुंसी। गावश्चरंत्यस्मिन्-गोचरः। संचरतेऽनेन-संचरः। वहः। व्रजः। व्यजंत्यस्मिन् व्यजः। संक्रमः। आपणः। खेलः। भगः। कषः। निकषः। निगमः।

+ खनर्डडरेकेकवकाघ ॥ ११५ ॥ खनेर्धोः करणाधारयोः पुंसी डान्यो भवति घश्च। आखन्यतेऽनेनास्मिन् वा आखः। आखरः। आखनिकः। आखनिकवकः। आखनः।

+ घञ् ॥ ११६ ॥ खनेर्धोः करणाधारयोः पुंसी घञ् स्यात्। आखानः।

तृस्त्रोऽव ॥ ११७ ॥ अवे वाच्याभ्यां करणाधारयोः पुंसी घञ् स्यात्। अवतारः। अवस्तारः।

हलः ॥ ११८ ॥ हलंताद्धोः करणाधारयोः पुंसी घञ् स्यात्। वेदः। वेगः। सगः। अपामार्गः। माधवः।

* दारजारसंहारोपावन्यायावहारावाया

* पृच्छी वाऽपदि ॥ १४५ ॥ पृच्छने वाऽपि सेमान्य चोर्लिङ् भवति यन्दिशब्दश्च प्रयुज्यते अलमर्थात् अपदि वा । समावयामि मुंजीत भवान् । अमुंक भवान् । पृच्छने किं ? अपि स्वारीपाक भुंजीत । अपदीति किं ? समावयामि यत्स भुंजीत ।-

हेतुफले लिङ् ॥ १४६ ॥ हेतौ फले च तत्कार्ये वर्तमानाद्धातोर्लिङ् वा स्यात् । यदि गुरून् उपासीत शास्त्रांत गच्छेत् । यदि गुरूनुपासिष्यते शास्त्रांत गमिष्यति ।

इच्छार्थेऽकामेऽकच्चिति ॥ १४७ ॥ इच्छार्थे स्वामिप्रार्थनेऽदने गम्यमाने धोर्लिङ् भव अकच्चिति-कच्चिच्छब्दाप्रयोगे । इच्छा मे भारतम-धीयीत भवान् । कामो मे भुंजीत भवान् । अकच्चितीति किं ?

कच्चिज्जीवति मे माता कच्चिज्जीवति मे पिता ।
मारापिद त्वां पृच्छामि कच्चिज्जीवति पार्वती ॥

इच्छार्थे लिङ्लोटौ ॥ १४८ ॥ इच्छार्थे धोः वापि वार्थिकलोटौ स्तः इच्छोद्योगे गम्यमाने । इच्छामि कामये भुंजीत भवान् । प्रार्थये भुंक्तां भवान् ।

तुमेककर्तृके ॥ १४९ ॥ एककर्तृके इच्छार्थे धोः वापि तुम् स्यात् । इच्छति भोक्तुं । कामयते भोक्तुं । वष्टि गर्तुं । एककर्तृके इति किं ? इच्छामि भुंक्तां भवान् ।

लिङ् ॥ १५० ॥ इच्छार्थे एककर्तृके धोः वापि लिङ् स्यात् । भुंजीयेति इच्छति । अधीयी-येति वांछति ।

* वेतस्सति ॥ १५१ ॥ इतोऽस्मादिच्छा-र्थादी सति भवति कर्त्रे लिङ् वा स्यात् । इच्छेत् । इच्छति । उशत् । वष्टि ।

विधिनिमंत्रणामंत्रणाधीष्टसंप्रश्नप्रार्थने लिङ् ॥ १५२ ॥ एष्वर्थेषु लिङ् स्यात् । विधौ-दानं कुर्यात् भवान् । प्राणिनो न हिंस्यात् । निमंत्रण-संध्यासु नियमं कुर्यात् । आमंत्रणे-इह भवान् आसीत । अधीष्टे-तत्त्वं भवान् गृह्णीयात् ।

संप्रश्ने-किं नु खलु जैनेंद्रमधीयीय । प्रार्थने-भवति मे जैनेंद्रमधीयीय ।

लोट् ॥ १५३ ॥ विध्यादिष्वर्थेषु धोर्लोट् स्यात् । अत्र स्थातु भवान् । प्राणिनो न हिनस्तु । संध्यासु नियमं करोतु । इह भवानास्तां । तत्त्वं गृह्णातु । किं नु खलु धर्मशास्त्रमध्यये । भवति जैनेंद्रमध्यये ।

* प्रैषातिसर्गप्राप्तकाले कृत्याश्च ॥ १५४ ॥ एष्वर्थेषु कार्याः भवति लोट् च । भवता खलु कटः कर्तव्यः । करणीयः । कार्यः । कटं करोतु भवान् हि प्रेषितोऽनुज्ञातः । भवतोऽवसरः ।

* लिङ् चोर्ध्वमौहूर्तिके ॥१५५॥ ऊर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद्धोः प्रैषादौ गम्यमाने लिङ् भवति कृत्याश्च यथा प्राप्तं च । उपरि मुहूर्तस्य शीघ्रं भवान् दानं दद्यात् । भवता खलु दानं दातव्यं देयं दानीयं ददातु भवान् । प्रेषितोऽनुज्ञातो भवत प्राप्तकालो दानकरणे ।

स्मे लोट् ॥१५६॥ स्मे वापि लोट् भव ऊर्ध्वमौहूर्तिकेऽर्थे प्रैषादौ गम्यमाने । ऊर्ध्वमुहूर्तात् भवान् कटं करोतु स्म प्रेषितोऽनुज्ञातो भवतोऽवसरः ।

अधीष्टे ॥१५७॥ स्मे वापि धोर्लोट् भव अधीष्टेऽर्थे । अंग स्म राजन् अर्थाणां भवानणु-व्रतानि रक्षतु ।

कालवेलासमये तुम् वाऽवसरे ॥१५८॥ कालादौ वापि धोर्लो तुम् भवसरे गम्यमाने । कालो भोक्तुं । वेला भोक्तुं । समयो भोक्तुं । कालो भोक्तव्यस्य । वेला भोजनस्य । समयो भोजनस्य । अवसर इति किं ?

कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥

लिङ् यदि ॥१५९॥ यच्छब्दप्रयोगे का-लादौ वापि चावसरे लिङ् स्यात् । कालो यद् भुंजीत भवान् । वेला यद् भुंजीत भवान् । समयो यद् भुंजीत ।

तृच्चावार्हे ॥ १६० ॥ अर्हेऽर्थे धोस्तृ

ऽन्या भवति लिङ् च । भवान् खलु कन्यायाः वोढा । भवता खलु कन्या वोढव्या वाह्या, वहनीया । भवान् कन्यां वहेत् । अर्हो योग्य इत्यर्थः ।

**आवश्यकाधमर्ण्ये णिन् ॥१६१॥** आवश्यके आधमर्ण्ये च गम्यमाने धोर्णिन् स्यात् । अवश्यकारी । अवश्यहारी । शतंदायी । निष्कंदायी ।

**कृत्याः ॥ १६२ ॥** आवश्यकाधमर्ण्ययोर्गम्यमानयोर्धोः कृत्या भवन्ति । भवता खलु गतोऽवश्यं कर्तव्यः, करणीयः, कृत्यः, कार्यः । भवता खलु निष्को दातव्यः, दानीयः, देयः ।

**शकि लिङ् च ॥ १६३ ॥** शक्यऽर्थे धोर्लिङ् भवति कृत्याश्च । भवान् खलु विद्यामधीयीत । भवता खलु विद्याऽध्येतव्या, अध्ययनीया । भवान् हि शक्तः ।

*** लोट् चाशिषि ॥ १६४ ॥** आशिष्यर्थे धोर्लोट् भवति लिङ् च । जयतात् । जयतां । जीयात् । जीयास्तां । आशिषि इति किं ? जीवति पथ्याशी ।

**क्तिच्क्तौ ॥ १६५ ॥** आशिष्यर्थे धोः क्तिच्क्तौ स्तः । भ्रम्यादिति भातिः । भवतात् भूतिः । देवा एनं देयासुरिति देवदत्तः । देवा एनं श्रूयासुरिति देवश्रुतः ।

**माङि लुङ् ॥ १६६ ॥** माङि वाचि धोर्लुङ् भवति । माकार्षीरधर्मं । मा हार्षीः परस्वं ।

**सस्मे लङ् च ॥ १६७ ॥** स्मेन सह माङि वाचि धोर्लुङ् भवति लङ् च । मास्म कुप्यत् । मास्मकुपत् । मास्मकरोत् । मास्मकार्षीत् ।

इति जैनेन्द्रव्याकरणे शब्दार्णवचन्द्रिकायां
लघुवृत्तौ द्वितीयाध्यायस्य
तृतीयः पादः ।

---

## चतुर्थः पादः ।

**धुयोगे स्याः ॥ १ ॥** धूनां योगे अन्यथा-कालेऽपि स्याः साधवो भवन्ति । विश्वदृश्वाऽस्य पुत्रो जनिता । कृतपुण्यो भविता । भाविकृत्यमासीत् । भूतमिताद्युक्तस्य भविष्यत्कालस्यानुवर्तते । तथाहि-विश्वदृश्वेति भूतकालो जनितेति भविष्यत्कालेन योज्यमानः साधुर्भवति । धोरधिकारे पुनर्धुग्रहणं तन्नाम्नस्तिपरिग्रहार्थं । स्याधिकारे स्यग्रहणं स्वमात्रप्रतीत्यर्थं । गोमानासीत् । गोमान् भवितेति भवतः सम्प्रतिकालेऽन्यकालेन साधुर्भवति ।

*** भृशाभीक्ष्ण्ये लोट् तस्य हिस्वौ वा तध्वमस्त्वर्थे ॥ २ ॥** यथाविधो लोटस्तस्यार्थस्तथार्थे अन्यत्वस्य तदापेक्ष्याभिव्यक्तिपरे कर्तृकर्मभावयुक्ते धुयोगे वाचि भृशाभीक्ष्ण्ययोरर्थयोर्वर्तमानाद्धोर्लोट् भवति सर्वलकारापवादः, तस्य लोटः हिस्वौ आदेशौ स्तः तध्वमोस्तु वा भवतः । लुनीहि लुनीहि इत्येवाहं लुनामि । आवां लुनीवः । वयं लुनीमः । लुनीहि लुनीहि इत्येव त्वं लुनासि । युवां लुनीथः । यूयं लुनीथ । तध्वमस्य वा-लुनीत लुनीत इत्येव यूयं लुनीथ । लुनीहि लुनीहीत्ययं लुनाति । इमौ लुनीतः । इमे लुनन्ति । अधीष्वाधीष्वेत्येवाहमधीये । आवामधीवहे । वयमधीमहे । अधीष्वाधीष्वेत्येव त्वमधीषे । युवामधीयाथे । यूयमधीध्वे । ध्वमस्तु वा—अधीध्वमधीध्वमित्येव यूयमधीध्वे । अधीष्वाधीष्वेत्येवायमधीते । इमौ अधीयाते । इमे अधीयते । तथार्थे इति किं ? लुनीहि लुनीहि इत्यनेन लूयते इति न भवति ।

*** प्रचये वा सामान्यार्थे ॥ ३ ॥** प्रचये समुच्चये गम्यमाने सामान्यार्थे धुयोगे वाचि लोट् स्यात् वा तस्य च हिस्वौ स्तः तध्वमोस्तु वा । क्रियाप्रचये-व्रीहीन् वप लुनीहि पुनीहि इत्येव यतते चेष्टते, समीहते । पक्षे-व्रीहीन् वपति लुनाति पुनाति इत्येव यतते चेष्टते समीहते । कर्मप्रचये-ग्राममट वनमट गिरिमटेत्येवाटति, अटते चेष्टते । पक्षे-ग्राममटति । वनमटति । गिरिमटति इत्येवायमटति । घटते चेष्टते । कर्तृप्रचये-देवदत्तोऽद्धि, गुरुदत्तोऽद्धि, जिनदत्तोऽद्धि इत्येव अयमोदनमत्ति । उभयप्रचये-ओदनं भुङ्क्ष्व सक्तून् पिब धानाः खाद इत्ययमभ्यवहरति । अभ्यवह्रियते । एवं-सूत्राण्यधीष्व वृत्तीरधीष्व भाष्याण्यधीष्व इत्येवाधीते पठति । पक्षे-सूत्राण्यधीते वृत्तीरधीते भाष्याण्यधीते इत्ययमधीते पठति ।

*पृच्छी वाऽस्यदि ॥ १४५ ॥ पृच्छने वाचि संभाव्ये योर्लिङ् भवति यदिसम्भ्रम प्रयुज्यत असमर्थात् अपदि वा । संभावयामि भुंजीत भवान् । अभुंक्त भवान् । पृच्छायां किं ? अपि खारीपाकं भुंजीत । अयदीति किं ? संभावयामि यत्स भुंजीत ।

हतुफले लिङ् ॥ १४६ ॥ हतौ फले च तस्यार्थे वर्तमानाद्वालिङ् वा स्यात् । यदि गुरून् उपासीत शास्त्रांत गच्छेत् । यदि गुरूनुपासिष्यते शास्त्रांतं गमिष्यति ।

इच्छोद्गोपेऽकच्चिदति ॥ १४७ ॥ इच्छोद्गोपे स्वामिप्रायवदन गम्यमाने धोर्लिङ् भव त्यकच्चिदति—कच्चित्प्रयोगे । इच्छा मे शास्त्रमधीयीत भवान् । कामा मे भुंजीत भवान् । अकच्चिदतीति किं ?

कच्चिज्जीवति मे माता कच्चिज्जीवति मे पिता ।
मारुविद त्वां पृच्छामि कच्चिज्जीवति पार्वती ॥

इच्छार्थे लिङ्लोट् ॥ १४८ ॥ इच्छार्थे धौ वाचि वार्थिल्लोटौ स्त इच्छोद्गोपे गम्यमाने । इच्छामि कामये भुंजीत भवान् । प्रार्थये भुंक्तां भवान् ।

तुमेककर्तृके ॥ १४९ ॥ एककर्तृके इच्छार्थे धौ वाचि तुम् स्यात् । इच्छति भोक्तुं । कामयते भोक्तुं । वष्टि गंतुं । एककर्तृके इति किं ? इच्छामि भुक्तं भवान् ।

लिङ् ॥ १५० ॥ इच्छार्थे एककर्तृके धौ वाचि लिङ् स्यात् । भुंजीयेति इच्छति । अधीयीयेति वांछति ।

*वाऽसति ॥ १५१ ॥ इत्यऽसमासिक्या *र्थेऽस्य वाचि भवति धातु लिङ् वा स्यात् । इच्छत् ।* इच्छति । उशत् । वष्टि ।

विधिनिमंत्रणामंत्रणाधीष्टसंप्रश्नप्रार्थने लिङ् ॥ १५२ ॥ एष्वर्थेषु लिङ् स्यात् । विधौ दाने कुर्वीत भवान् । प्राणिनो न हिंस्यात् । निमंत्रण-सन्ध्यासु नियमं कुर्वीत । आमंत्रणे इह [illegible] । अधीष्ट—व्रतं भवान् गृह्णीयात् । संप्रश्ने—किं नु खलु जैनग्रंथमधीयीय । प्रार्थने—भवति मे जैनग्रंथमधीयीय ।

लोट् ॥ १५३ ॥ विध्यादिष्वर्थेषु धोर्लोट् स्यात् । व्रतं रक्षतु भवान् । प्राणिनो न हिनस्तु । सन्ध्यासु नियमं करोतु । इह भवानास्तां । व्रतं गृह्णातु । किं नु खलु धर्मशास्त्रमध्यये । भवति जैनग्रंथमध्यये ।

*प्रैषानुज्ञावसरे व्याश्च ॥ १५४ ॥ एष्वर्थेषु व्याश्यां भवति लोट् च । भवता खलु कटः कर्तव्यः । करणीयः । कार्यः । कटं करोतु भवान् हि प्रेषितोऽनुज्ञातः । भवतोऽवसरः ।

*लिङ्व्यार्ध्वमौहूर्तिके ॥१५५॥ ऊर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद्धो प्रैषादौ गम्यमाने लिङ् भवति व्याश्च यथा प्राप्तं च । उपरि मुहूर्तस्य दानं भवान् दानं दद्यात् । भवता खलु दानं दातव्यं, देयं दानीयं ददातु भवान् । प्रेषितोऽनुज्ञातो भवत प्राप्तकालो दानकरणे ।

स्मे लोट् ॥१५६॥ स्मे वाचि लोट् भव त्यूर्ध्वमौहूर्तिकेऽर्थे प्रैषादौ गम्यमाने । ऊर्ध्वमुहूर्तात् भवान् कटं करोतु स्म प्रेषितोऽनुज्ञातो भवतोऽवसरः ।

अधीष्टे ॥१५७॥ स्मे वाचि धोर्लोट् भव त्यधीष्टेऽर्थे । अंग स्म राजन् अधीष्टामो भवानणु व्रतानि रक्षतु ।

कालवेलासमये तुम् वाऽवसरे ॥१५८॥ कालादौ वाचि धोर्वा तुम् भवत्यवसरे गम्यमाने । कालो भोक्तुं । वेला भोक्तुं । समयो भोक्तुं । कालो भोजनस्य । वेला भोजनस्य । समयो भोजनस्य । अवसर इति किं ?

कालः पचति भूतानि कालः संहरते प्रजाः ।
*कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥*

लिङ् यदि ॥१५९॥ यच्छब्दप्रयोगे कालादौ वाचि धोरवसरे लिङ् स्यात् । कालो यद् भुंजीत भवान् । वेला यद् भुंजीत भवान् । समयो यद् भुंजीत ।

शक्त्यार्हे ॥१६०॥ अर्हेऽर्थे धोस्तृ

कन्या भवति लिङ् च । भवान् खलु कन्याया: वोढा । भवता खलु कन्या वोढव्या वाह्या, वहनीया । भवान् कन्यां वहेत् । अर्हो योग्य इत्यर्थः ।

आवश्यकाधमर्ण्ये णिन् ॥१६१॥ आवश्यके आधमर्ण्ये च गम्यमाने धोर्णिन् स्यात् । अवश्यंकारी । अवश्यकामी । शतंदायी । निष्कंदायी ।

ण्या ॥ १६२ ॥ आवश्यकाधमर्ण्ययोर्गम्यमानयोर्ण्यो भवति । भवता खलु धर्मोऽवश्य कर्तव्यः, करणीयः, कृत्यः, कार्यः । भवता खलु नि ष्को दातव्य, दानीयः, देय ।

शकि लिङ् च ॥ १६३ ॥ शक्यऽर्थे धोर्लिङ् भवति ण्याश्च । भवान् खलु विद्यामधीयीत । भवता खलु विद्याऽध्येतव्या, अध्ययनीया । भवान् हि शक्तः ।

* लोट् चाशिषि ॥ १६४ ॥ आशिष्यर्थे धोर्लोट् भवति लिङ् च । जयतात् । जयतां । जीयात् । जीयास्तां । आशिषि इति किं ? जीवति पथ्याशी ।

क्तिच्क्तौ ॥ १६५ ॥ आशिष्यर्थे धोः क्तिच्क्तौ स्तः सौ । शम्यादिति शांतिः । भवतात् भूतिः । देवा एनं देयासुरिति देवदत्तः । देवा एनं श्रूयासुरिति देवश्रुतः ।

माङि लुङ् ॥ १६६ ॥ माङि वाचि धोर्लुङ् भवति । माकार्षीत्धर्मं । मा हार्षीः परस्वं ।

सस्मे लङ् च ॥ १६७ ॥ स्मेन सह माङि वाचि धोर्लङ् भवति लुङ् च । मास्म स्म कुरुत् । मास्मकुरुत् । मास्मकरोत् । मास्मकार्षीत् ।

इति जैनेंद्रव्याकरणे शब्दार्णवचन्द्रिकायां लघुवृत्तौ द्वितीयाध्यायस्य तृतीयपादः ।

---

## चतुर्थः पादः ।

भुयोगे स्ता ॥ १ ॥ भूतो योगे अधपाधकालेऽपि स्ता साधवो भवति । विश्वदृश्वाऽस्य पुत्रो भविता । कृतपुण्यः श्वो भविता । भाविकृत्यमासीत् । भुवतमिहामुष्यस्य निर्वर्तस्य कालमनुवर्तते । तथाहि—विश्वदृश्वेति भूतकालो जनितेति भविष्यत्कालेन योग्यमानः साधुर्भवति । धोरधिकारे पुनर्धुग्रहणं जन्मास्तिपरिग्रहार्थं । स्ताधिकारे सप्तवचनं समानप्रतीत्यर्थं । गोमानासीत् । गोमान् भवितेति भवंत संप्रतिकालस्यान्यकालेन साधुर्भवति ।

* भृशाभीक्ष्ण्ये लोट् तस्य हिस्वौ वा तध्वमस्तथार्थे ॥ २ ॥ यथाविधो लोर्डतस्यार्थस्यार्थे कालापसर्गायेकत्वाद्यमिव्यक्तिरे कर्तृकर्मभावयुक्ते धुयोगे वाचि भृशाभीक्ष्ण्ययोरर्थयोर्वर्तमानाद्धोर्लोड् भवति सर्वकारकाणाम्, तस्य लोटः हिस्वौ आदेशौ स्तः, तध्वमोस्तु वा भवतः । लुनीहि लुनीहि इत्येवाहं लुनामि । आवां लुनीवः । वयं लुनीमः । लुनीहि लुनीहि इत्येव त्वं लुनासि । युवां लुनीथः । यूयं लुनीथ । तध्वमस्य वा—लुनीत लुनीत इत्येव यूयं लुनीथ । लुनीहि लुनीहीत्येवायं लुनाति । इमौ लुनीतः । इमे लुनति । अधीष्वाधीष्वेत्येवाहमधीये । आवामधीवहे । वयमधीमहे । अधीष्वाधीष्वेत्येव त्वमधीषे । युवामधीयाथे । यूयमधीध्वे । ध्वमस्तु वा—अधीध्वमधीध्वमित्येव यूयमधीध्वे । अधीष्वाधीष्वेत्येवायमधीते । इमौ अधीयाते । इमे अधीयते । तथार्थे इति किं ? लुनीहि लुनीहि इत्यनेन लूयते इति न भवति ।

* प्रचये वा सामान्यार्थे ॥ ३ ॥ प्रचये समुच्चये गम्यमाने सामान्यार्थे धुयोगे वाचि लोट् स्यात् वा तस्य च हिस्वौ स्तः तध्वमोस्तु वा । क्रियाप्रचये—व्रीहीन् वप लुनीहि पुनीहि इत्येव यतते चेष्टते समीहते । पक्षे—व्रीहीन् वपति लुनाति पुनाति इत्येव यतते चेष्टते समीहते । कर्मप्रचये—ग्राममट वनमट गिरिमटेत्येवाटति,यतते चेष्टते । पक्षे—ग्राममटति । वनमटति । गिरिमटति इत्येवाग्ममटति । अटते । चेष्टते । कर्तृप्रचये—देवदत्तोऽद्धि, गुरुदत्तोऽद्धि, जिनदत्तोद्धि इत्येव बयमेदनमद्यः । उभयप्रचये—ओदनं भुंक्ष्व, सक्तून् पिब धानाः खाद इत्यभ्यवहरति । अभ्यवह्रियते । एवं—सूत्राण्यधीष्व वृत्तारधीष्व भाष्याण्यधीष्व इत्येवाधीते पठति । पक्षे—सूत्राण्यधीते वृत्तीरधीते भाष्याण्यधीते इत्यधीते, पठति ।

निषेधेऽलंखल्वोः क्त्वा ॥ ४ ॥ निषेध-वाचिनोरलंखल्वोर्वाचोः क्त्वा वा स्यात् । अलं कृत्वा । खलु कृत्वा । अलं बाले रुदित्वा, रुदितेन, रोदनेन । निषेधे इति किं ? अलंकारः ।

* परावरे ॥ ५ ॥ योगे क्त्वा वा स्यात् परेऽवरे च गम्यमाने । पर्वतमतिक्रम्य नदी । नदीमप्राप्य पर्वतः । नदीपरावरः पर्वत इत्यर्थः । पर्वतातिक्रमेण नदी । नद्यप्राप्त्या पर्वतः ।

* माङः स्वार्थे ॥ ६ ॥ माङः क्त्वा वा स्यात् स्वार्थे । अपमित्य याचते । याचित्वाऽपमयते ।

परकालैककर्तृकात् ॥ ७ ॥ परः कालो यस्याः क्रियायाः सा परकाला तस्याः क्रियायाः एक-कर्तृकात् पूर्वकालाद्धोः क्त्वा वा स्यात् । आसित्वा भुंक्ते । भुक्त्वा व्रजति । अप्यसुर्वर्तमानात् आसते मोक्तुमिच्छति । एककर्तृकादिति किं ? भुक्तवति याते दाता भुंक्ते ।

* पूर्वाग्रेप्रथमाभीक्ष्ण्ये खमुञ् ॥ ८ ॥ पूर्वादौ वाचि आभीक्ष्ण्यार्थे च परकालैककर्तृकाद्धोः खमुञ् वा स्यात् । पूर्वं भोजं व्रजति । पूर्वं भुक्त्वा व्रजति । अग्रेभोजं । अग्रे भुक्त्वा । प्रथमं भोजं । प्रथमं भुक्त्वा व्रजति । आभीक्ष्ण्ये—भोजं भोजं व्रजति । भुक्त्वा भुक्त्वा व्रजति । पायं पायं पीत्वा पीत्वा व्रजति ।

कृञोऽन्यथैवंकथमित्थंस्वनर्थात् ॥ ९ ॥ एषु वाक्षु कृञोऽनर्थात् एककर्तृकात् खमुञ् वा स्यात् । अन्यथाकारं भुंक्ते । एवंकारं, कथंकारं, इत्थंकारं भुंक्ते । अन्यथा कृत्वा । एवं कृत्वा । कथं कृत्वा । इत्थं कृत्वा । अनर्थादिति किं ? अन्यथा कृत्वा शिरो भुंक्ते ।

यथातथेऽसूयाप्रत्युक्तौ ॥ १० ॥ एतयो-र्वाचोः कृञः खमुञ् वा स्यात् असूयाप्रत्युक्तौ गम्य-मानायां । कथं भोक्ष्यसे भवानिति पृष्टः असूयकः त्वं प्रत्याह यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन । असूयाप्रत्युक्ताविति किं ? यथाकृत्वाहं भोक्ष्ये तथा द्रक्ष्यसि ।

* कर्मण्याक्रोशे ॥ ११ ॥ कर्मणि वाचि कृञः खमुञ् वा भवति आक्रोशे गम्यमाने । चौरंकारमा-क्रोशति । चौरं कृत्वा आक्रोशति ।

स्वादुम्सु णम् ॥ १२ ॥ स्वाद्वर्थेषु कर्मसु वाक्षु कृञः णम् वा स्यात् । स्वादुंकारं भुंक्ते । स्वा-दु कृत्वा । संपन्नंकारं । सम्पन्नं कृत्वा ।

* कार्त्स्न्ये दृशिविदः ॥ १३ ॥ कर्मणि वाचि कार्त्स्न्ये गम्यमाने दृशेर्विदश्च णम् भवति । साधुदर्शं प्रणमति । सर्वं साधुं प्रणमतीत्यर्थः । अति-थिवेदं भोजयति । यं वेत्ति, विन्दति, विन्ते वा सर्वं भोजयतीत्यर्थः । कार्त्स्न्ये इति किं ? साधुं दृष्ट्वा प्रण-मति । अतिथिं विदित्वा भोजयति ।

* यावति जीविविदः ॥ १४ ॥ यावति वाचि जीविविदिभ्यां वा णम् स्यात् कार्त्स्न्ये गम्यमाने । यावज्जीवमधीते । यावद्वेदं गृह्णाति ।

चर्मोदरे पूरेः ॥ १५ ॥ एतयोर्वाचोः पू-रेर्णम् स्यात् । चर्मपूरमास्ते । उदरपूरं शेते । चर्मोदरं च पूरयित्वेत्यर्थः ।

* वर्षेयत्तेऽस्योर्लुक् वा ॥ १६ ॥ कर्मणि वाचि पूरयतेर्णम् स्यात्, अस्य पूरेरूकारस्य च लुक् वा वर्षेयत्ते वर्षप्रमाणे । गोष्पदप्रं वृष्टो देवः । गोष्पदपूरं । सीताप्रं । सीतापूरं वृष्टो देवः ।

* चेलाऽर्थे क्नोपेः ॥ १७ ॥ चेलाऽर्थे वाचि क्नोपयतेर्णम् स्यात् वर्षेयत्ते । चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपं ।

* शुष्कचूर्णरूक्षे पिषस्तस्मिन् ॥ १८ ॥ एषु वाक्षु पिषेर्णम् स्यात् तस्मिन्नेव धौ अनुप्र-युक्ते । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि ।

जीवाकृते ग्रहकृञः ॥ १९ ॥ जीवाकृत-योर्वाचोर्यथासंख्यं ग्रहिकृञ्भ्यां णम् स्यात् तस्मिन्ने-वानुप्रयुक्ते । जीवग्राहं गृह्णाति । अकृतकारं करोति ।

निमूले कषः ॥ २० ॥ निमूले कर्मणि वाचि कषेर्णम् स्यात् । निमूलकाषं कषति ।

समूले हनश्च ॥ २१ ॥ समूले वाचि हन्तेः

---

१ । अनुप्रयोगे भवार्थता विधायते ।

कषादिषु णम् भवति वा तस्मिन्ननुप्रयुक्ते । समूलघातं हति । समूलकाषं कषति ।

करणे ॥ २२ ॥ करणे वाचि हन्तेर्णम् भवति तस्मिन्ननुप्रयोगे । पाणिघातं हन्ति । असिघातं ।

* हस्ते वृद्ग्रहः ॥ २३ ॥ हस्तवाचिनि वाप्येभ्यो णम् वा भवति करणे तेष्वनुप्रयुक्तेषु । हस्तवर्तं वर्तते । करवर्तं । हस्तवर्तं वर्तयति । पाणिवर्तं । हस्तग्राहं गृह्णाति । बाहुग्राहं ।

* स्वस्नेहे पुषपिषः ॥ २४ ॥ स्ववाचिनि स्नेहे वाचिनि च करणे वाचि यथासंख्यं पुषिपिषि-भ्यां णम् भवति तस्मिन्ननुप्रयोगे । स्वपोषं पुष्णाति । आत्मपोषं । गोपोषं । उदपेषं पिनष्टि । घृतपेषं ।

* बंधः स्त्री ॥ २५ ॥ बन्धेर्णम् स्यात् स्त्री तस्मिन्ननुप्रयोगे । अट्टालिकाबन्धं बद्धः । मयूरिकाबन्धं बद्धः । क्रौञ्चबन्धं बद्धः । णमंता बन्धविशेषाणां संज्ञा एताः ।

* आधारे ॥ २६ ॥ बन्धेराधारे वाचि णम् भवति वा तस्मिन्ननुप्रयोगे । चक्रबन्धं बद्धः । कूटबन्धं बद्धः ।

कर्त्रोर्जीवपुरुषयोर्नशवहोः ॥ २७ ॥ कर्तृवाचिनोर्जीवपुरुषयोर्वाच्योर्यथासंख्यं नशिवहिभ्यां णम् भवति तस्मिन्ननुप्रयोगे । जीवनाशं नश्यति । पुरुषवाहं वहति । कर्त्रोरिति किं ? जीवेन नष्टः । पुरुषं वहति ।

ऊर्ध्वे शुषपूरः ॥ २८ ॥ ऊर्ध्वे कर्तृवाचिनि वाचि शुषिपूरिभ्यां णम् भवति तस्मिन्ननुप्रयोगे । ऊर्ध्वशोषं शुष्यति । ऊर्ध्वपूरं पूर्यते ।

कर्मणि चेवे ॥ २९ ॥ कर्मणि कर्तरि च वाचि इवार्थे णम् भवति तस्मिन्नेव धात्वनुप्रयुक्ते । घृतनिधायं निहितं । घृतमिव निहितमित्यर्थः । जीवितनाशं रक्षितः । कर्तरि-खनिखनाशं नश्यति । खनिखमिव नश्यतीत्यर्थः । अकूरनाश नष्टः ।

उपदंशो भायां ॥ ३० ॥ भायां वाचि उपपूर्वाद्दंशेर्णम् स्यात् वा । मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं । मूलकेनोपदश्य भुङ्क्ते ।

* हिंसार्थैकाप्यात् ॥ ३१ ॥ हिंसार्थाद्धो-रेकाप्यादेककर्मकात् भाति वाचि णम् स्यात् । दण्डघातं गाः कालयति । दण्डेनाघातं । दण्डताडं गाः सादयति । दण्डेनाताडं । हिंसार्थादिति किं ? चन्दनेनानुलिप्य देवानाराधयति । एकाप्यादिति किं ? दण्डेनाहत्य गोपालं गाः सादयति चौरः ।

* ईपि चोपे पीडरुधकृषः ॥ ३२ ॥ ईपि भायां च वाचि पीडादेरुपपूर्वात् णम् स्यात् । पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडं । पार्श्वाभ्यामुपपीडं शेते पार्श्वोपपीडं शेते । व्रजोपरोधं । व्रजे उपरोधं । व्रजोपरोधं, व्रजेनोपरोधं गाः स्थापयति । पाण्युपकर्षं पाणौ उपकर्षं । पाण्युपकर्षं, पाणिनोपकर्षं धानाः पिनष्टि ।

प्रमाणासत्त्योः ॥ ३३ ॥ ईपि भायां च वाचि धोर्णम् भवति प्रमाणे आसत्तौ चार्थे । द्व्यङ्गुलोत्कर्षं गण्डिकाश्छिनत्ति, द्व्यङ्गुले उत्कर्षं । द्व्यङ्गुलेनोत्कर्षं । केशग्राहं युध्यन्ते । केशेषु ग्राहं । केशैर्ग्राहं ।

स्वर्पादाने ॥ ३४ ॥ त्वरायामनुमत्यर्थे धोः अपादाने वाचि णम् भवति । शय्योत्थायं धावति । शय्याया उत्थायं धावति । आकृष्टोपकर्षं अपूपान् भक्षयति । आपूपात् अपकर्षं । त्वरेति किं ? आसनादुत्थाय गच्छति ।

इपि ॥ ३५ ॥ इपि वाचि धोस्त्वरायामर्थे णम् भवति । यष्टिग्राहं युध्यन्ते । यष्टिग्राहं । पटापकर्षं । पटमपकर्षं ।

स्वाङ्गेऽध्रुवे ॥ ३६ ॥ स्वाङ्गे इपि वाप्ये ध्रुवे धोर्णम् भवति । अक्षिनिकोचं जल्पति । अक्षिणी निकोचं । भ्रूक्षेपं, भ्रुवमुत्क्षेपं कथयति । अध्रुव इति किं ? शिर उत्क्षिप्य व्याहरति ।

सक्लेशे ॥ ३७ ॥ सक्लेशे स्वाङ्गे इपि वाचि धोर्णम् भवति । उरःप्रतिपेषं युध्यन्ते । उरसि प्रतिपेषं । शिरश्छेदं, शिरसि छेदं युध्यन्ते ।

विशपतपदस्कन्दां व्याप्यासेव्ये ॥ ३८ ॥ एभ्यो णम् भवति व्याप्यासेव्ययोरिपिवाप्योर्वाच्ययोः । व्याप्ये-गेहानुप्रवेशमास्ते । गेहं गेहमनुप्रवेशं । गेहमनुप्रवेशमनुप्रवेशमास्ते । आसेव्ये-गेहानुप्रपातमास्ते । गेहंगेहमनुप्रपातं, गेहमनुप्रपातमनुप्रपातं । गेहानुप्रपा-

* भोपाद् ग्रस्योऽनीय ॥ ५२ ॥ प्रोपपूर्वा भ्यां ग्रस्थाभ्यामनीय कर्तरि वा स्यात् । प्रवचनी यो गुरुः शास्त्रस्य । प्रवचनीयं गुरुणा शास्त्रं । उपस्थानीयः शिष्यो गुरो । उपस्थानीयः शिष्येण गुरुः ।

* आपत्स्वोर्ण्यः ॥ ५३ ॥ आङ्पूर्वाभ्यां पतिप्लुभ्यां ण्यः कर्तरि वा स्यात् । आपात्योऽयं । आपात्यमनेन । आप्लाव्योऽयं । आप्लाव्यमनेन ।

* श्लिषशीङ्स्थासवसजनरुहजपारभावक्त ॥ ५४ ॥ श्लिषादेः आरंभादादिकर्मार्थाच्च यः क्तः स कर्तरि वा स्यात् । आश्लिष्टः कन्यां भवान् । आश्लिष्टा कन्या भवता । आश्लिष्टं भवता । अतिशयितो गुरुं भवान् । अतिशयितो गुरुर्भवता । अतिशयितं च । उपस्थितो गुरुं भवान् । उपस्थितो गुरुस्त्वया । उपस्थितं च । उपासितो गुरुं भवान् । उपासितो गुरुर्भवता । उपासितं च । अनूषितो गुरुं भवान् । अनूषितो गुरुर्भवता । अनूषितं च । अनुजातो माणविकां माणवकः । अनुजाता माणविका माणविकेन । अनुजातं च । आरूढो वृक्षं भवान् । आरूढो वृक्षो भवता । आरूढं च । अनुजीर्णो वृषलीं भवान् । अनुजीर्णा वृषली भवता । अनुजीर्णं च । प्रकृतः कटं भवान् । प्रकृतः कटो भवता । प्रकृतं च । प्रभुक्तो भवानोदनं । प्रभुक्त ओदनो भवता । प्रभुक्तं च । प्रासितो भवान् । आसितं भवता । प्रसुप्तो भवान् । प्रसुप्तं भवता ।

भिगत्यर्थाच्च ॥ ५५ ॥ भिसंज्ञकात् गत्यर्थाच्च क्तः कर्तरि वा भवति यथाप्राप्तं च । आसितो भवान् । आसितं भवता । गतो ग्रामं भवान् । गतो ग्रामो भवता । गतं च । यातो ग्रामं भवान् । यातो ग्रामो भवता । यातं च ।

* भाधारे चाद्यर्थाच्च ॥ ५६ ॥ अद्यर्थाभिगत्यर्थाच्चाधारे वा क्तः स्यात् । यथा प्राप्तं च । आसिमिमि अदंति स्म—इदमेषां अन्नं । इदमेषां भुक्तं । इद एभिर्भुक्तमोदनः । इद एभिः पीतं मधु । भावे-इद अयमेमि । धे-इदमेषामासितं । इदमेषां शयितं । इह भवतामासितं । आसितं भवता । इदमेषां गतं । इदमेषां यातं । गतो ग्रामं भवान् । गतो ग्रामो भवता । गतं भवता ।

ख्यः कर्मणि च भावे च धे ॥ ५७ ॥ सकर्मकाद्धोः अकारः कर्मणि कर्तरि च भवति धेर्भावे कर्तरि च । क्रियते कटः । करोति कटं । धे-सुप्यते भवता । स्वपिति भवान् ।

तयोर्व्यक्तखार्थौ ॥ ५८ ॥ तयोः कर्मभावयोः व्यक्तखार्थौ भवति । कर्तव्यः कटः । ध्यातव्यं भवता । कृतः कटः । शयितं भवता । सुकरः कटो भवता । ईषत्करः । सुपानं पयो भवता साक्षात्कृतं भवता ।

+ भिगम्यवहनीदीकृषभिदेः कर्माणि स्यादि ॥ ५९ ॥ मुख्ये कर्मणि भिप्रभृतीनां स्यः स्युः । आस्यते माणवको मासं । आस्यते माणवको गोदोहं । गम्यते माणवको ग्रामं । उह्यते भारो ग्रामं । नीयते अजा ग्रामं । ह्रियते भारो ग्रामं । कृष्यते शाखा ग्राम । जीयते दत्तः शतं । दृश्यते ग्राम भत । शयितव्यो माणवको मास । इति तव्यादयोऽपि योज्याः ।

+ दुहादीनां गौणे ॥ ६० ॥ एषां गौणे कर्मणि स्यादयो भवंति । दुह्यते पयो गौः । याच्यते गां देवदत्तः । पृच्छ्यते धर्ममाचार्यः । दोग्धव्या, दोहनीया दोह्या पयो गौः ।

+ बोधर्थयोः ॥ ६१ ॥ बोधार्थानामधय नां च धूनां तयोः प्रधानाप्रधानकर्मण्यादय स्युः । बोध्यते माणवको धर्म । बोध्यते माणव धर्मं । बोध्यते माणवको ग्रंथ । माणवक भयो वा भोज्यते माणवकः ओदनं । माणवकमोदनो वा ।

* पुरकेसिमास्वक्रूपपच्या कर्मकर्तरि ॥ ६२ ॥ पुरादयः कर्मकर्तरि भवंति । भंगुर । भिदु काष्ठं । पचेलिमा माषाः । भिदेलिमानि काष्ठानि । पर्यासिता कुटे स्वयमेव । कृष्टे पच्यते कृष्टपच्या शाल्यः स्वयमेव । पच्यते पयो निपच्य ।

भीमादयोऽपादाने ॥ ६३ ॥ … दाने कारके भवंति । बिभेत्यस्मात् भीमः । भीष्मः । भयानकः । चक्र । प्रस्कन्द । तत्क ।

पर्मे ॥ ८३ ॥ क्ङिती यकाराणां इकारस्य ऽं भवति भविष्ये । अपचः । अपचत् । अपचन् । पचेः । पचेत् । अपाक्षीः । अपाक्षीत् । अपक्ष्यः । अपक्ष्यत् । अपक्ष्यन् ।

* मिपसयतसोऽमृतंतताः ॥८४॥ क्ङितां वा मिबादीनां अमादय आदेशाः भवंति । अपचम् । अपचतं । अपचत । अपचतां । एवं सर्वत्र ।

सेस्सीयुट् ॥ ८५ ॥ क्ङिदेशानां सेः सीयुट् भवति । पचेय । पचेवहि । पचेमहि । पक्षीय । पक्षीवहि । पक्षीमहि ।

* यक्पासुण्मे ॥ ८६ ॥ क्ङिः यासुट् स्यात् भविष्ये । पचेय । पचेव । पचेम । अध्याम । अध्याम । कुर्यां । कुर्याव । कुर्याम ।

किद्राशिषि ॥ ८७ ॥ क्ङिो यासुट् किद् भवति आशिषि । उच्यासं । उच्यास्व । उच्यास्म । इज्यास । इज्यास्व । इज्यास्म । जाग र्यासं । जागर्यास्व । जागर्यास्म ।

रन्झेरेट् ॥८८॥ क्ङिो झस्य इटश्च रन् अत् इत्येतावादेशौ भवतः । पचेरन् । पचेय । पक्षीरन् । पक्षीय ।

सुट् तथो ॥ ८९ ॥ क्ङिस्तकारथकार यो सुट् स्यात् । पक्षीष्ठाः । पक्षीयास्थां । पक्षीष्ट । पक्षीयास्तां ।

झेर्जुस ॥ ९० ॥ क्ङितः झेर्जुस् भवति । कुर्युः । क्रियासुः ।

यविसेः ॥ ९१ ॥ एभ्यः परस्य झेर्जुस स्यात् । अबीभयुः । अजहुः । अजागरुः । अविदुः । अकार्षुः ।

आतः ॥ ९२ ॥ आकारांतात्सेः परस्य झेर्जुस् स्यात् । अदुः । अधुः । अस्थुः । अगुः । नियमोऽयं—आत एव सुब्रतात् झेर्जुस नान्य स्मात् । अभूवन् ।

लङो वा ॥ ९३ ॥ आतः परस्य लङो झेर्जुस भवति वा । अयुः । अयान् । अदुः । अदान् ।

द्विषः ॥ ९४ ॥ द्विषः परस्य लङो झेर्जुस वा स्यात् । अद्विषुः । अद्विषन् ।

१

मिङ्क्षिदूः ॥ ९५ ॥ धोर्विहिता मिङः षितश्च या गसंज्ञका भवंति । मिङ्—भूयते । तर ति । शित्—गच्छतु । यजमान ।

झेपोऽग एव ॥ ९६ ॥ मिङ्शिद्भ्यामन्यः शेषः अगसंज्ञक एव भवति । भविता । भवि तुं । भवितव्य ।

लिट् ॥ ९७ ॥ लिट् अगसंज्ञो भवति । पेचिथ । शकिथ ।

लिङाशिषि ॥ ९८ ॥ आशिषि लिङ् अ- गसंज्ञो भवति । भावे—जागरिषीष्ट । कर्मणि—पवि- षीष्ट । आशिषीति किं ? जागृयात् । जागृयाता ।

* तुह्योस्ताङ्वा ॥ ९९ ॥ तुह्योराशिषि तता- ङ्वा स्यात् । जीवतात् भवान् । जीवतु भवान् । जीव तात् त्वं । जीव त्वं । कुरुतात् । मृष्टात् ।

लुटोऽन्यस्य डारौरसः ॥ १०० ॥ लुटो ऽन्यसंज्ञकस्य डारौरसो भवति । भोक्ता । भोक्तारौ । भोक्तारः । अध्येता । अध्येतारौ । अध्येतारः ।

इति जैनेन्द्रव्याकरणे शब्दार्णवापरनामधेये
शब्दार्णवचन्द्रिकानाम्नि लघुवृत्तौ
द्वितीयोऽध्यायः समाप्तः



स्यात् अरण्यभिधेयायां । द्विपदा, त्रिपदा ऋक् । ऋचीति किं ? द्विपदी स्त्री ।

**अनीष** ॥ १७ ॥ यदितोऽग्रे वस्याम तदनीषो वेदितव्यं । वस्यति–द्रुमदिङ्व्यदि । कुरु-चरी । अनीष इति किं ? बहुकुरुचरा ।

***इमद्विदद्यणम्ठण्ठञ*** ॥ १८ ॥ एभ्यः स्त्रियां ङी स्यात् । सौरंगमी नगरी । मद्रचरी । सौपर्णेयी । कुम्भकारी । औत्सी । आक्षिकी । प्रास्थिकी ।

***यञोऽपावयत्*** ॥ १९ ॥ यञन्तान्मृदः स्त्रियां ङी स्यात् यकारांतात्पटाच्च परं यकं विहाय । गार्गी । वात्सी । अपावयादिति किं ? गौ-कक्ष्या । आवट्या ।

**फट्** ॥ २० ॥ यञन्तात् फट् स्यात् । गार्ग्यायणी । पौतिमाष्यायणी । आवट्यायनी ।

**लोहितादिशकलांतात्** ॥ २१ ॥ लोहितादिभ्यः शकलपर्यंतेभ्यः फट् स्यात् । लौहि-त्यायनी । शांशित्यायनी । शाकल्यायनी । लोहि-तादिः गर्गाद्यंतर्गणः ।

**कौरव्यासुरिमाण्डूकात्** ॥ २२ ॥ एभ्यः फट् भवति । कौरव्यायणी । आसुरायणी । माण्डूकायनी ।

**गौरादिभ्यः** ॥ २३ ॥ एभ्यः स्त्रियां ङी स्यात् । गौरी । मत्सी । मानुषी ।

**वयस्यनंत्ये** ॥ २४ ॥ वयसि अनंत्ये वर्त-मानान्मृदः स्त्रियां ङी स्यात् । कुमारी । किशोरी । वर्करी । अनंत्य इति किं ? स्थविरा ।

**रात्** ॥ २५ ॥ रसंज्ञकान्मृदः स्त्रियां ङी भवति । पंचपूली । पंचतक्षी । दशरथ्यी ।

**परिमाणादुपि** ॥ २६ ॥ परिमाणां-तात् रात् उपि सति ङी स्यात् । द्वाभ्यां कुडवाभ्यां क्रीता द्विकुडवी । त्रिकुडवी । द्व्याढकी । परिमाणा-दिति किं ? पञ्चाश्वा ।

**न विस्ताचितकंबल्यात्** ॥ २७ ॥ विस्ताद्यंतात् उपि सति ङी न स्यात् । द्विविस्ता । त्रिविस्ता । द्व्याचिता । द्विकंबल्या ।

**कांडात् क्षेत्रे** ॥ २८ ॥ कांडात् रात् उपि ङी न स्यात् क्षेत्रे । द्वे कांडे प्रमाणमस्याः द्विकांडा, त्रिकांडा क्षेत्रभक्तिः । क्षेत्र इति किं ? द्विकांडी रज्जुः ।

**पुरुषात् प्रमाणे वा** ॥ २९ ॥ पुरुषांतात् रात् प्रमाणे वा ङी स्यात् उपि । द्वौ पुरुषौ प्रमा-णमस्याः द्विपुरुषी । द्विपुरुषा । त्रिपुरुषी । त्रिपुरुषा खाता । प्रमाण इति किं ? द्विपुरुषा ।

**गुणोक्तेरुतोऽखरुसंयोगोपात्** ॥ ३० ॥ गुणवचनान्मृदः खरुसंयोगोपवर्जितात् उकारांतात् वा ङी स्यात् । पटुः । पट्वी । मृदुः । मृद्वी । पृथुः । पृथ्वी । तनुः । तन्वी । गुणोक्तेरिति किं ? आखुरियं । उत इति किं ? शुचिः स्त्री । अखरुसंयोगोपात् इति किं ? खरुरियं । पाण्डुरियं ।

**बह्वादेः** ॥ ३१ ॥ बह्वादिभ्यो वा ङी स्यात् स्त्रि-यां । बहुः । बह्वी । पद्धतिः । पद्धती । अंचतिः । अंचती ।

**+ इतोऽक्तेः** ॥ ३२ ॥ अक्त्यंतादिकारांतात् मृदः स्त्रियां वा ङी स्यात् । भूमिः । भूमी । अशनिः । अशनी । आरमभरिः । आरमभरी । अक्तेरिति किं ? कृतिः ।

**+ चंद्रभागान्नद्यां** ॥ ३३ ॥ चंद्रभागाद्वा ङी भवति नद्यां । चंद्रभागी चंद्रभागा नदी । चंद्रभागान्या ।

***शोणपृश्नैतहरितभरतलोहिताद्वर्णाद्वो नश्च*** ॥ ३४ ॥ शोणादेर्वर्णवाचकात् वा ङी स्यात् तत्संनिधाने तकारस्य च नकारः । शोणी । शोणा । श्येनी श्येता । एनी एता । हरिणी हरिता । भरणी भरता । लोहिनी लोहिता । शोणादेरिति किं ? पीता ।

***क्नोऽसितपलितात्*** ॥ ३५ ॥ वर्णवाचि-भ्यामसितपलिताभ्यां वा ङी स्यात् तकारस्य च क्नादेशः । असिक्नी असिता । पलिक्नी पलिता ।

***कालशबलसारंगपिशंगपिंगलकल्माषात्***

शिशब्दस्य मादेशो भवति । समान' पतिरस्या' सप त्नी । एकपत्नी । वीरपत्नी ।

✱ करणात् क्रीतात् ॥ ५५ ॥ करणपूर्वात् क्रीतांतात् ङी स्यात् । वस्त्रेण क्रीयते स्म वस्त्रक्रीती । वसनक्रीती । करणादिति किं ? सुक्रीता ।

क्तादल्पे ॥ ५६ ॥ करणपूर्वात् क्तांतात् ङी मवत्यल्पेऽर्थे । अभ्रैर्विलिप्यते स्म अभ्रविलिप्ती द्यौ । सूपविलिप्ती पात्री । अल्पे इति किं ? चंद नानुलिप्ता स्त्री ।

✱ जातेर्वादप्रतिपच्छन्नमाद्यः ॥ ५७ ॥ जातिपूर्वात् क्तांतात् प्रतिपदादिवर्जितात् बसात् ङी स्यात् । शंखो भिन्नो यस्या शंखभिन्नी । ऊरु भिन्नी । केशलूनी । बालुमन्नी । जातेरिति किं ? मासयाता । बादिति किं ? पादपतिता । अप्रतिपदा- देरिति किं ? दन्तप्रतिपन्ना । दंतमिता । दंत- जाता । दंतकृता ।

✱ पाणिगृहीत्यादि' पत्नी ॥ ५८ ॥ पा- णिगृहीत्यादिकवंतो बस साधु स्यात् पत्नी चाच्या चेत् । पाणिर्गृहीतो यस्याः सा पाणिगृहीती । कर गृहीती । पाण्यात्ती । पाणिगृहीताऽन्या ।

✱ बाऽच्छाद्यस्वांगात् ॥ ५९ ॥ बहुवर्जि तादस्वांगजातिवाचिन' परात् क्तांतात् प्रतिपदादि वर्जितात् बसात् वा ङी स्यात् । सागर गम्भमनया सागरजग्धी । सागरजग्धा । पर्लांडुभक्षिती । पर्लांडुभ क्षिता । सुरापीती । सुरापीता । अबह्वस्वांगाग्निति किं ? बहुं कृत्तमस्या बहुकृता । शंखभिन्नी ।

स्वांगान्नीचास्स्फोटा' ॥ ६० ॥ स्वांगा न्नीच' स्फोटवर्जितात् स्त्रियां ङी वा स्यात् । स्निग्ध मुखी । स्निग्धमुखा । पृथुस्तनी । पृथुस्तना । दीर्घकेशी । दीर्घकेशा । स्वांगादिति किं ? बहुयवा । वाधिकारे पुनर्न्यग्रहणं यार्थं । प्राप्तकेशी प्राप्तकेशा स्त्रिया । निष्केशी, निष्केशा यूका । असत्रोढ इति किं ? सुगुल्फा । कल्याणगुल्फा । चारुपार्ष्णी ।

✱ नासिकोदरौष्ठजंघादंतकर्णशृंगांगगात्र कंठात् ॥ ६१ ॥ स्वांगभूतनासिकाद्यंतात् स्त्रियां ङी वा स्यात् । दीर्घनासिकी । दीर्घनासिका । तनूदरी । तनूदरा । बिम्बोष्ठी । बिम्बोष्ठा । समजंघी । सम जंघा । समदंती । समदंता । चारुकर्णी । चारु- कर्णा । तीक्ष्णशृंगी । तीक्ष्णशृंगा । मृदुंगी । मृदुंगा । तनुगात्री । तनुगात्रा । कम्बुकंठी । कम्बुकंठा ।

+दीर्घजिह्वात् ॥ ६२ ॥ अस्मात् स्वांगवाच- कात् वा ङी स्यात् । दीर्घजिह्वा । दीर्घजिह्वी ।

+पुच्छात् ॥ ६३ ॥ पुच्छात् स्वांगात् नीचः स्त्रियां वा ङी स्यात् । कल्याणपुच्छी । कल्याणपुच्छा ।

+मणिशरकबरविषात् ॥ ६४ ॥ मण्यादि पूर्वात् पुच्छान्नीच' ङी स्यात् । मणिः पुच्छे यस्या मणिपुच्छी । शरपुच्छी । कबरं पुच्छमस्या—कबरपु च्छी । विषपुच्छी ।

पक्षाच्चोपमात् ॥६५॥ इवार्थात् पक्षांतात्पु च्छांताच्च नीचः स्त्रियां ङी स्यात् । उलूक इव पक्षौ यस्याः सा उलूकपक्षी शाला । उलूकपुच्छी सेना ।

न क्रोडादिबह्वच्य' ॥ ६६ ॥ क्रोडाद्य- तात् बह्वजंताच्च मृद' स्त्रियां ङी न स्यात् । कल्याणी क्रोडाऽस्या' कल्याणक्रोडा । कल्याणखुरा । कल्याणघाटा । बह्वच्य'—पृथुजघना । दृढहृदया । महाललाटा ।

सहनञ्विद्यमानात् ॥ ६७ ॥ सहाद्भ्य' परात् स्वांगात् ङी न स्यात् । सकेशा । सनासि का । अकेशा । अनासिका । विद्यमानकेशा । विद्यमाननासिका ।

नखमुखात् स्त्रौ ॥ ६८ ॥ नखमुखांतात् ङी न स्यात् स्त्रौ । शूर्पणखा । व्याघ्रणखा । गौर मुखा । कालमुखा । स्त्राविति किं ? शूर्पमिव नखा यस्या सा शूर्पनखी । शूर्पनखा । चन्द्रमुखी । चन्द्रमुखा ।

✱ सरूपसिश्वीनार्य' ॥ ६९ ॥ एते शब्दा निपात्यन्ते । सखीय । सखिशब्दात् ङीसे प्राप्त सत्यापि च नित्यो ङीस' । नास्या' शिश्वरस्ति अशिश्वी । नारी ङी । नृनरयो' ङी नारादेशश्च ।

✱ जातेरयोङ्मुद्रात् ॥ ७० ॥ योङ्मुद्रव- र्जितान्त जातिवाचिनः स्त्रियां ङी स्यात् । कुक्कु- टी । कठी । मयूरी । सूकरी । जातेरिति किं ?

दाम्यं । वक्ष्यति—तस्यापत्यमिति । उपगोरपत्यं औपगवं । बाग्रहणाद् वाक्यमपि साधु । आपादिति किं ? अपत्यशब्दात्पत्तिर्मा भूत् । समर्थादिति किं ? कम्बलं उपगोरपत्यं देवदत्तस्य ।

+ गोत्रयोगोशविद्यामिहारिरिवकाद्यात् ९० जिह्वाकात्महरितकात्यवर्जितात् गोत्रयो गोत्रादिष बहुत्वमानस्यो भवति । कात्यभारायणस्येमे कात्यभारायणीयाः । स्वकृत्सस्यपीयाः । अजिह्वाहरितकात्यादिति किं ? जिह्वाकस्य कात्यस्य जिह्वाकात्यः । तस्येमे जैह्वाकाता । हरितमस्य कात्यः हरितकात्य तस्येमे हारितकाता—अणेवात्र न तु छः ।

+ गोर्यांश्च ॥ ९१ ॥ गोशब्दात् अजादित्वप्रसंगे यस्यो भवति । गोरपत्यं गव्यः । गौर्देवताऽस्य गव्यः । गवि भवं गव्यं । अजादिति किं ? गोमय ।

प्राग्द्रोरण् ॥ ९२ ॥ प्राग् द्रुशब्दात् येऽर्थ वक्ष्येते तेष्वण् अभिकृतो वेदितव्यः । वक्ष्यति—तेन रक्तं रागात् । कषायेण रक्तं वस्त्रं काषायं ।

अश्वपत्यादेः ॥ ९३ ॥ अश्वपत्यादिभ्यो अऽण् भवति प्राग् द्रोरर्थेषु । आश्वपत । गाणपत । भानपतः ।

* यमादित्यदित्यादित्यपतिपयोर्ण्योऽणपवादे वाऽस्ये ॥ ९४ ॥ यमादेः पतिशेषाच्च प्राग्द्रवीये स्वार्थादिष्वर्थेऽपत्यादौ अणपवादविषये च ण्यः स्यात् । यमस्यापत्यं यमो देवता वाऽस्य-याम्यः । दितेरपत्यं दैत्यः । अदितेरपत्यं आदित्यः । आदित्यस्यापत्यं आदित्यः । वामसत्यः । बार्हस्पत्यः । सैनापत्यः । प्राजापत्यः । अणपवादे च—याम्यः । आदित्यः । अत इम प्राप्तः । अत्र इति किं ? वन्यपतिर्नाम वाहनं तस्य स्वं—औन्द्रपतं । पत्रादिभ्यण् ।

+ वहिषष्टीकञ् च ॥ ९५ ॥ वहिशब्दात् ठीकञ्-स्यात् ण्यश्च । वहिर्जातो वाहीकः । बाह्यः । वाहीकी ।

+ अञ् पृथिव्याः ॥ ९६ ॥ पृथिवीशब्दात् प्राग्द्रवीयेऽर्थे अञ् भवति । पृथिव्या अपत्यं-तत्र भवो वा पार्थिवः । पार्थिवा ।

यस्सादेश्चाञ् ॥ ९७ ॥ एभ्यः पृथिव्याश्च प्राग्द्रवीयेऽञ् भवति । औत्सः । औदपानः । तरुणी—तारुणः । पार्थिवः । पार्थिवी ।

+ ग्रीष्मादच्छन्दसि ॥ ९८ ॥ ग्रीष्मादञ् भवत्यच्छन्दसि । ग्रीष्मे भवः ग्रैष्मः घर्मः । अच्छन्दसीति किं ? ग्रैष्मो देवताऽस्या ग्रैष्मी त्रिष्टुप् ।

+ बष्कयादसे ॥ ९९ ॥ बष्कयशब्दाद् प्राग्द्रवीयेऽर्थे अञ् भवत्यसे । बष्कयस्यापत्यं बाष्कयः । असे इति किं ? सौबष्कयिः ।

+ देवाद् यञ् च ॥१००॥ देवात् यञ् भवति अञ् च । दैव्यं । दैवं ।

* कस्यान्नेरुण् ॥ १०१ ॥ काभ्यां ढण् स्यात् प्राग्द्रवीयेऽर्थे । कविर्देवताऽस्य तत्र भव तस्मादागत वा काव्येयं । आग्नेयं ।

स्थाम्नोऽत् ॥ १०२ ॥ स्थामन्शब्दान्तात् प्राग्द्रवीयेऽर्थे अत् भवति । अश्वस्थाम्नोऽपत्यं अश्वत्थामः ।

+ लोम्नोऽपत्येषु ॥१०३॥ लोमन्शब्दान्तात् अपत्येषु बहुषु अत् भवति । उडुलोमोऽपत्यानि बहूनि उडुलोमाः । सरलोमाः । अपत्येष्विति किं ? औडुलोमिः ।

गोत्रेऽस्यलुप् ॥१०४॥ यस्काद्गोत्रे इत्यादिना च लुक् तस्य प्राग्द्रवीयेऽर्थे अजादिविषये अलुप् भवति । यस्कानां छात्राः यास्कीयाः । शिवादिना अण् प्राप्तः । गार्गीयाः । आत्रेयीयाः । गर्गादि यञ् । अचीति किं ? गर्गेभ्य आगतं गर्गरूप्यं । गर्गमयं । प्राग्द्रोरिति किं ? गर्गेभ्यो हितं गर्गीयं ।

+ गर्गभार्गविका ॥१०५॥ अणोऽलुग् निपात्यते विवाहे द्वन्द्वे । गर्गाणां भृगूणां च यूनां विवाहो गर्गभार्गविका ।

राद्युवपत्ये ॥१०६॥ राद्युवन्तात् परो योऽञादिर्यत् तस्योप् भवत्यपत्यवर्जिते प्राग्द्रवीयेऽर्थे । पञ्चसु गुरुषु भवः पञ्चगुरुर्नमस्कारः । दशधर्मो मोक्षः । द्वावनुयोगी अधीते द्व्यनुयोगः । त्र्यनुयोगः । अनुप इति किं ? पञ्चसु कपालेषु संस्कृतं पञ्चकपालं । तस्येदं पाञ्चकपालं । अनपत्ये इति किं ? द्वयोर्देवदत्तयोरपत्यं द्वैदेवदत्तिः । त्रैदेवदत्तिः ।

यूनि ॥ १०७ ॥ यूनि यस्यस्तस्योप् भवति अजादिविषये । फाण्टाहृतस्यापत्यं युवा फाण्टाहृतिः ।

* व्यासादेरकञ् च ॥१२५॥ अपत्यार्थे इञ् भवति सर्वसंनियोगे अकञ् चान्तादेश । व्यासस्यापत्यं वैयासकि । सुधातुरपत्य सौधातकिः ।

+पुत्रपुनर्भुदुहितृननान्दृभ्योऽनन्तरेऽञ्॥१२६॥ एभ्योऽनन्तरेऽपत्ये अञ् स्यात् । पौत्र । पौनर्भव । दौहित्र । नानान्द्र ।

+पारशवः॥१२७॥परस्त्रीशब्दस्यानन्तरेऽपत्ये अञ् निपात्य परशुभावश्च । परा स्त्री परस्त्री । तस्यापत्यं पाराशव ।

* विदादेर्वृद्धेऽनृष्यानन्तर्ये ॥१२८॥ विदादिभ्यो वृद्धेऽपत्ये अञ् स्यात् अपीपामानंतर्ये विदाय । वैद । आर्वः।अनृष्यानंतर्य इति किं । ईवम्यः सप्तमः काश्यपानां ।

* कुञ्जादेर्ञ्यः ॥१२९॥ कुञ्जादिभ्यो वृद्धेऽपत्ये ञ्यो भवति । कुञ्जस्यापत्यं कौञ्जायन्य । ब्राध्नायन्यः । शांखायन्य ।

* नडादिभ्यः फक्॥१३०॥एभ्यःफक् स्यात् वृद्धेऽपत्ये । नाडायन । चारायण । मौञ्जायन ।

हरितादेरञः ॥ १३१ ॥ हरितादेरञन्ताद् वृद्धे वर्तमानात् अपत्ये यूनि फञ् भवति । हारितस्यापत्यं युवा हारितायनः। कैदासायन ।

यञिञोः ॥ १३२ ॥ यञन्तादिञन्ताच्च वृद्धे वर्तमानादपत्ये यूनि फक् स्यात् । गार्ग्यायणः । वात्स्यायनः । दाक्षायणः ।

+क्रोष्ट्रुसर्वको लौ॥१३३॥आभ्यां वृद्धेऽपत्य फञ् स्यात् अंत अकञ्च लः । क्रोष्टुरपत्यं क्रौष्टायन । सार्वकायन ।

* शरद्वच्छुनकदर्भाग्निशर्मकृष्णरणात् भृगुवत्साग्रायणब्राह्मणवासिष्ठे ॥ १३४ ॥ शरद्वतादिभ्यो भार्गवादिषु वृद्धापत्येषु गम्येषु फञ् भवति । शारद्वतायनो भार्गव । शौनकायनो वात्स्यः। दार्भायण आग्रायण । आग्निशर्मायणो वार्षगण्यः । कार्ष्णायनो ब्राह्मण । राणायनो वाशिष्ठ । अन्यत्र—शारद्वत । शौनक । दार्भि । आग्निशर्मिः । कार्ष्णि । राणिः ।

द्रोणपर्वतजीवन्ताद्वा ॥ १३५ ॥ एभ्यो वृद्धेऽपत्य फञ् स्याद् वा । द्रौणायन ,द्रौणिः । पार्वतायन , पार्वति । जैवन्तायन , जैवन्ति ।

गर्गादेर्यञ् ॥१३६॥ गर्गादिभ्यो यञ् स्यात् वृद्धेऽपत्ये । गार्ग्य । वात्स्य । वाज्यः ।

मधुबभ्रोर्ब्राह्मणकौशिके ॥१३७॥ मधुबभ्रुभ्यां वृद्धेऽपत्ये यथासंख्यं ब्राह्मणे कौशिके चार्थे यञ् स्यात् । माधव्यो ब्राह्मण । बाभ्रव्य कौशिक । माधव , बाभ्रवोऽन्यत्र ।

कपिबोधादाङ्गिरसे ॥ १३८ ॥ आभ्यां यञ् स्यात् आङ्गिरसे वृद्धे अपत्ये । काप्य , बौध्य । कापेयः, बौधिरन्य ।

वतण्डात् ॥१३९ ॥ अस्माद् यञ् स्यादाङ्गिरसे वृद्धे । वातण्ड्य ।

स्त्रियामुप् ॥ १४० ॥ वतण्डादाङ्गिरसेऽपत्ये वृद्धे यञ उप् स्यात् स्त्रियां । वतण्डी ।

अश्वादेः फञ् ॥ १४१ ॥ अश्वादिभ्यः अपत्ये वृद्धे फञ् स्यात् ।आश्वायन । शांखायन । वानायनः ।

+ शकमरद्वाजादात्रेये ॥ १४२ ॥ आभ्यां फञ् भवत्यात्रेयेऽपत्ये वृद्धे । शाकायन । भारद्वाजायन —आत्रेयः। अन्यत्र—शाकि । भारद्वाजः।

भगात्त्रैगर्ते भारद्वाजे ॥ १४३ ॥ भर्गात्रिभ्यां यथासंख्यं फञ् स्यात् त्रैगर्ते भारद्वाजे च । भार्गायण । आत्रेयायणः। अन्यत्र भार्गि । आत्रेयि ।

* शिवादेरण् ॥१४४॥शिवादिभ्योऽण् भवत्यपत्ये । शैव । प्रौष्ठ । जांब ।

* नदीमानुषीनाम्नोऽद्रो ॥१४५॥ नदी

तांशुवाप्य । कात्मनिः । कात्मन्य ।

तिकादेः फिञ् ॥ १८४ ॥ तिकादिभ्योऽपत्ये फिञ् स्यात् । तैकायनिः । कैतवायनिः । बाभ्रायनिः ।

+दगुकौशलकर्मारच्छागवृषाद् युट् च ॥१८५॥ एभ्योऽपत्ये फिञ् स्यात् युट् चागमः । दागव्यायनिः। कौशल्यायनिः। कार्मार्यायणिः। छाग्याय नि । वार्ष्यायणि ।

द्व्यचोऽणः ॥ १८६ ॥ अणंतात् द्व्यचः फिञ् स्यादपत्ये । कर्तुरपत्यं कार्त्र । तस्यापत्यं कार्त्रायणि । पैत्रायणिः ।

वाऽवृद्धाद्वो ॥ १८७ ॥ दुसंज्ञकात् अवृद्धवाचिनोऽपत्ये वा फिञ् स्यात् । बालुग्यायनिः। बालुरधि । आदित्यगवायनिः । आदित्यगवि । अवृद्धादिति किं ? प्रावाहण । दाक्षिरिति किं ? चार्कपनिः ।

पुत्रांताद् ॥१८८॥ दो पुत्रांतादपत्येऽर्थे वा फिञ् स्यात् । गार्गीपुत्रायणिः । गार्गीपुत्रि । वासवदत्तापुत्रायणिः । वासवदत्तापुत्रि ।

+ चर्मकादेश्च किञ् ॥ १८९ ॥ चर्मकादिभ्य पुत्रांताच्च दोरपत्ये फिञ् वा स्यात् । तत्सन्नियोगे किगागमश्च । कांकायनि । कांकयः । वाकिनकायनि । वाकिनि । पुत्रांताद्यः—गार्गीपुत्रकायणि । गार्गीपुत्रि ।

फिञोऽद्राः ॥ १९० ॥ मनुसंज्ञकादपत्य फिञा स्यात् । त्रिपुरायनिः । त्रपुरिः। औविजया यनि । औविजयि । मनुशायनिः । मनुजुकि ।

* कुलात्सः ॥ १९१ ॥ कुलात् खा भवति अपत्ये । कुलीन । क्षत्रियकुलीन ।

० दकञ्यौ चाज्ञ ॥ १९२ ॥ कुलादपत्ये दकञ्यौ स्त अस वा । कौलेयकः । कुल्य । कुलीन' । अस इति किं ? आत्यकुलीनः ।

दुःकुलाड्ढण् ॥ १९३ ॥ दुःकुलादपत्ये ढण् वा स्यात् । दौःकुलेय । दुःकुलीनः ।

० महाकुलादञ्खञौ ॥१९४॥ अस्मादपत्येऽञ्खञौ वा स्त । माहाकुलः । माहाकुलीन । महाकुलीन' ।

मधुराद् यः ॥ १९५ ॥ मधुरादपत्ये यो भवति । मधुर्य ।

+ जातौ राज' ॥ १९६ ॥ राजन्शब्दादपत्ये यो भवति जातौ गम्यमानायां । राजन्य । राजनोऽन्य ।

सम्राट् घः ॥ १९७ ॥ सम्राट् जातौ घो भवति अपत्ये । क्षत्रिय ।

० मनोऽञ्यञ् पाण्यौ ॥१९८॥ मनुशब्दादपत्ये जातौ अञ्यौ स्तः पुग् चागम' । मानुष' । मनुष्य' ।

द्रिः ॥ १९९ ॥ द्रिरित्ययमधिकारो वेप आपादपरिसमाप्तेः । तत्रैवोदाहरिष्यामः ।

* राष्ट्रराज सनाम्नोऽञ् राजापत्ये॥२००॥ राष्ट्रजनपदात् क्षत्रियसनाम्नः क्षत्रियाच्च राज समानशब्दात् यथासंख्यं राजन्यपत्यं चार्थेऽञ् स्यात् । पंचालानामपत्यं राजा वा पांचाल । पांचालौ । पंचालाः । ऐक्ष्वाकः । ऐक्ष्वाकौ । इक्ष्वाकवः । वैदेह । वैदेही । विदेहा । सनाम इति किं ? पुराष्ट्राणां राजा—सौराष्ट्रः ।

गांधारिसाल्वयाभ्यां ॥ २०१ ॥ आभ्यां राष्ट्रराजवाचिभ्यां राजन्यपत्ये च अञ् स्यात् । गांधार' । साल्वेय ।

० पुरुद्रमगधकलिंगसूरमसादण ॥२०२॥ पुरुशब्दाद् द्रमग मगधादेश्च राजन्यपत्यं चार्थेऽण् स्यात । पुरोरपत्यं पौरवः । अंगानां राजा पत्यं वा आंग । आंग । सौवः । पौंड्रः । मागध' । कालिंगः । सौरमसः ।

इति शब्दार्णवापरनाम्नि जैनेन्द्रव्याकरण शब्दार्णवचन्द्रिकायां लघुवृत्तौ तृतीयस्याध्यायस्य प्रथम पादः



* द्विमायमादकुरुकोसलाम्न्यः ॥२०३॥ दुर्लक्षकात् इकारादण् मकारादे अजादादिभ्यश्च राष्ट्रवाचिभ्यो राजवाचिभ्यश्च सनामभ्यो यथा क्रम राजन्यपत्ये वार्थे भ्यो भवति। आंवष्ठ्य । सौवीर्य । दार्म्यः । इन्–आवंत्यः । कौसल्य । वानस्पत्यः । नादि–नैषध्य । नैपथ्य । मा माथ्य । कौरव्यः । कौसल्य ।

साल्वांशमत्यप्रपकलकूटाश्मकादिञ् । २०४ साल्वांशिभ्य मत्स्यप्रयादेश इञ् स्यात् । उदुंब राणां राजापत्यं वा औदुंबरिः । तैलखलि । आ जमीढि । यौगन्धरिः । मात्स्यमयि । काकूटि। आश्मकिः ।

+ पांडोर्ड्यण् ॥ २०५ ॥ पांडुशब्दात् राजन्यपत्ये ड्यण् स्यात् । पांडूनां राजा पांडो रपत्यं वा पांड्यः । पांड्यौ । पांडवः ।

उप् चोळादिभ्यः ॥२०६॥ चोलप्रभृतिभ्यः राष्ट्रेभ्यादिना विहितस्य त्यस्योप् भवति । चोलानां राजापत्यं वा चोल । केरल । कंबोज ।

* कुत्सवंते स्त्रियां॥२०७॥कुत्यवंतिभ्यां परस्य ञ्यस्योप् भवति स्त्रियां। कुंतीनां राज्ञी अपत्यं वा स्त्री–कुंती । अवती ।

* कुरोर्वा ॥२०८॥ कुरो-परस्य ञ्यस्य स्त्रियां उप् वा भवति । कुरूः । कौरव्यायणी ।

* प्रेरवांऽप्राग्भर्गादेः ॥२०९॥ प्राग्भर्गादिवर्जि तात् अन्यस्मात् परस्य इरकारस्य स्त्रियामुप् भवति । अपष्ठ्यानां राज्ञी अपत्यं वा स्त्री–अपा ष्ठ्या । सूरसेनी । मद्री । प्रेरिति किं ? औपगवी । अप्राग्भर्गादेरिति किं ? पांचाली । वैदेही । आंगी । वांगी । भर्गादि—भार्गी । कारूषी । कैकेयी । यौधेयी ।

# द्वितीय पादः ।

तेन रक्तं रागात् ॥ १ ॥ तेनेति भासमर्थात् रागवाचिनो मृद रक्तमित्येतस्मिन्नर्थे यथाविहितं त्यो भवति । कुसुंभेन रक्तं वस्त्रं कौसुम । कौंकुमं । काषाय । हारिद्रं । मांजिष्ठं । रागादिति किं ? पुत्रेण रक्तं वस्त्र ।

+ लाक्षारोचनाट्ठण् ॥२॥ आभ्यां भासम र्थाभ्यां रक्तमित्येतस्मिन्नर्थे ठण् भवति । लाक्षया रक्तं लाक्षिकं वस्त्रं । रोचनिकं ।

* शकलकर्दमाद्वा ॥ ३ ॥ आभ्यां भास मर्थाभ्यां रक्तमित्येतस्मिन्नर्थे ठण् वा स्यात् । शकलेन रक्तं शाकलिकं, शाकलं कार्दमिकं कार्दमं ।

नीलपीतकौ ॥ ४ ॥ एतौ रक्तमित्येतस्मि न्नर्थे निपात्यौ । नीलेन नील्या वा रक्तं नीलं । पीतेन पीतकेन वा रक्तं पीतकं । नीलनीलीपीत केभ्योऽञ । पीतात् कन ।

* शुक्रयाद्भाड् युक्तेऽब्दः ॥ ५ ॥ गुरु-

म्यां संस्कृतं भक्ष्य इत्येतस्मिन्नर्थे यो भवति । शूले संस्कृतं शूल्यं मांस । उखायां स्थाल्यां सस्कृत उख्य ।

दध्नष्ठण् ॥ २० ॥ दध्नः ठण् स्यात् । दध्नि सस्कृत दाधिक ।

वोदश्वित ॥ २१ ॥ अस्माद्वा ठण् स्यात् । उदश्विति संस्कृत-औदश्वित्क । औदश्वित: ।

क्षीराड्ढण् ॥ २२ ॥ अस्मात् ढण् स्यात् । क्षीरे सस्कृतं क्षैरेयं ।

सास्य पौर्णमासीति सौ ॥ २३ ॥ सेति वासमर्थात् अस्येति षार्थे यथाविहित स्यो भव ति मद्दार्थ सा चेत् पौर्णमासी सौ संज्ञाविषये । इति करणो विवक्षार्थः तेन मासेऽर्द्धमासे सवत्सरे वा स्यः । पौषी पौर्णमासी अस्य मासस्य-पौषो मास:, अर्द्धमास', सवत्सरो वा । माघो मास । सावीति किं ? पौषी पौर्णमासी अस्य पंचरात्रस्य ।

* अश्वत्थाग्रहायण्याष्ठण् ॥ २४ ॥ आभ्यां ठण् स्यात् सौ । अश्वत्था पौर्णमासी अस्याश्व त्थिको मास । आग्रहायणिको मासाद्य ।

फाल्गुनीश्रवणाकार्तिकीचैत्र्या वा ॥२५॥ एभ्यः ठण् वा स्यात् सौ । फाल्गुनी पौर्णमासी अस्य-फाल्गुनिको मासः फाल्गुनो वा । श्रा वणिक', श्रावण' । कार्तिकिकः, कार्तिकः । चैत्रिकः, चैत्र ।

देवता ॥ २६ ॥ सेति वासमर्थादस्येति षार्थे यथाविहितं स्यो भवति यद्दार्थ सा देवता चेत् । अर्हन् देवता अस्य-आर्हतः । जैनः । शैवः । वैष्णवः । बौद्धः । भागवतः ।

+ शुक्राद् घ ॥ २७ ॥ शुक्रशब्दाद् घो भवति । शुक्रो देवतास्येति शुक्रियः ।

* द्यु पावोऽपोनपादपांनपाच्छतरुद्रात्॥२८॥ एभ्यो घो भवति स्वसंनियोगे पात् तुमाव । अपोनपाद्देवतास्येति अपोनप्त्रियः । अपांन प्त्रिय । शतरुद्रिय' ।

छः ॥ २९ ॥ तेभ्य छो भवति तुमा वश्चातः । अपोनप्त्रीयः । अपांनप्त्रीयः । शतरुद्रीयः ।

+ पैंगाक्षीपुत्रादिभ्यः ॥ ३० ॥ एभ्य छो भवति देवतार्थे । पैंगाक्षीपुत्रीयं । तार्णबिन्दवीयं ।

महेंद्राद् घाणौ च ॥ ३१ ॥ महेंद्रशब्दाद् सास्य देवतार्थे घाणौ स्त छश्च । महेंद्रिय , माहेंद्रः, महेंद्रीय ।

कसोमाट्ट्यण् ॥ ३२ ॥ आभ्यां ट्यण् स्यात् देवतार्थे । क' प्रजापतिर्देवताऽस्य-काय । कायी । सौम्य । सौमी ।

* वाय्वृतुपितुर्य ॥३३॥ एभ्यो यो भवति देवतार्थे । वायव्यं । ऋतव्यं । उषस्यं । पित्र्यं ।

* द्यावापृथिवीशुनासीराग्नीषोममरुत्वद्वास्तोष्पतिगृहमेधाच्छश्च ॥ ३४ ॥ एभ्यश्छो भवति यश्च देवतार्थे । द्यावापृथिवीय । द्यावापृ थिव्यः । शुनासीरीय' । शुनासीर्यं । अग्नीषोमीय । अग्नीषोम्य । मरुत्वतीय' । मरुत्वत्यः । वास्तो ष्पतीय । वास्तोष्पत्यः । गृहमेधीय । गृहमेध्य' ।

महाराजप्रोष्ठपदाट्ठण् ॥ ३५ ॥ आभ्यां ठण् स्यात् देवतार्थे । माहाराजिक' । प्रौष्ठपदिक ।

कालाद् भववत् ॥ ३६ ॥ कालवाचिभ्यो देवतार्थे भव इव स्यविधिर्भवति । यथा-मासे भवं मासिक । आर्द्धमासिकं । तथा-मासो देवतास्य मासिक । आर्द्धमासिकं । सांवत्सरिक । वासंत ।

+ आदेश्छंदसः प्रगाथे ॥३७॥ वासमर्था दादिभूताच्छन्दसः षार्थे यथाविहितं स्यो भवति । यस्यादि स प्रगाथश्चेत् । पंक्तिरादिरस्य प्रगा थस्य पांक्त । आनुष्टुभः । आदेरिति किं ? अनुष्टुम्मध्यमस्य प्रगाथस्य ।

तस्य समूह ॥ ३८ ॥ तस्येति षासम-

र्थात् समूह इत्येतस्मिन्नर्थे यथाविहितं स्यो भवति । काकानां समूहः काकं । बार्कं । बागम्यस्य ।

भिक्षादेः ॥ ३९ ॥ भिक्षादिभ्यो यथाविहितं स्यो भवति समूहेऽर्थे भिक्षाणां समूहः भैक्षं । क्षैत्रं । कारीषं । गार्भिणं । यौवनं ।

+ क्षुद्रकमालवात् सेनाख्यौ ॥ ४० ॥ अस्मादण् स्यात् सेनाख्यौ । क्षुद्रकाश्च मालवाश्च क्षुद्रकमालवाः—तेषां समूहः क्षौद्रकमालवी सेना । सेनेति किं ? क्षौद्रकमालवकं ।

गोत्रक्षोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ॥ ४१ ॥ गोत्रवाचिभ्यो वृक्षादिभ्यश्च वुञ् भवति समूहे । औपगवकं । गार्गकं । वार्द्धकं । औक्षकं । औष्ट्रकं । औरभ्रकं । राजकं । राजन्यकं । राजपुत्रकं । वात्सकं । मानुष्यकं । आजकं ।

कदाराद् यञ् च ॥ ४२ ॥ अस्मात् समूहे यञ् भवति वुञ् च । कैदार्यं । कैदारकं ।

* हस्तिकवचपचित्ताच ठण् ॥ ४३ ॥ हस्तिन् कवचिन्शब्दाभ्यां आचित्तवाचिभ्य केदाराच समूहेर्थे ठञ् स्यात् । हस्तिनां समूहः हास्तिकं । कावचिकं । आपूपिकं । शाष्कुलिकं । मौदकिकं । कैदारिकं ।

+ धेनोरनञ ॥ ४४ ॥ अनञ्पूर्वाद् धेनोष्ठञ् स्यात् समूहे । धैनुकं । अनञ इति किं ? अधेनूनां समूहः आधेनवं ।

* छाऽश्वात् ॥ ४५ ॥ अश्वात् समूहे छो वा स्यात् । अश्वीयं । आश्वं ।

* केशाण्ण्य ॥ ४६ ॥ केशात् समूहे ण्यो वा स्यात् । कैश्यं । कैशिकं ।

गणिकायाः ॥ ४७ ॥ गणिकाशब्दात् ण्यो भवति । गाणिक्यं ।

+ ण्योऽकादिभ्योऽप्यिनि ॥ ४८ ॥ अनञ्शब्दादे ठकादिभ्यश्च यथासंख्यं अञ् इनौ स्तः । शूनां समूहः शौवं । अन्हां आन्हं । खण्डिनां खाण्डं । डकिनी । खलिनी । कुटुम्बिनी ।

+ पश्वा पार्श्वे ॥ ४९ ॥ पर्शुशब्दात् णः स्यात् । पशूनां समूहः पार्श्वं ।

गजग्रामजनबन्धुसहायात्तल् ॥ ५० ॥ गजादेस्तल् स्यात् । गजानां समूहः गजता । ग्रामता । जनता । बन्धुता । सहायता ।

+ पृष्ठपार्हीनौ क्रतू ॥ ५१ ॥ पृष्ठ अहन् शब्दाभ्यां यथासंख्यं यखखौ निपात्यौ क्रतुश्चेत् । पृष्ठानां समूहः पृष्ठ्य । अहीनः । आहमन्यन् ।

चरणाद्धर्मवत् ॥ ५२ ॥ चरणं कठादिस्तद्वाचकात् समूहे धर्म इव स्वविधिः स्यात् । यथा—कठानां धर्मः काठकः । कालापकः । तथा—तेषां समूहः काठकं । कालापकं । छान्दोग्यं ।

+ वाताटूल ॥ ५३ ॥ वातात्समूहेऽर्थे ऊल स्यात् । वातूलः ।

+ यः ॥ ५४ ॥ वातात् यो भवति । वातानां समूहो वात्या ।

पाशादेः ॥ ५५ ॥ पाशादिभ्यो यो भवति पाशानां समूहः पाश्या । तृण्या । खल्या ।

+ ब्राह्मणमाणववाडवात् ॥ ५६ ॥ एभ्य समूहे य स्यात् । ब्राह्मण्यं । माणव्यं । वाडव्यं ।

गोरथात् ॥ ५७ ॥ आभ्यां समूहे यो भवति । गव्या । रथ्या ।

* त्रकट्यौ ॥ ५८ ॥ आभ्यां समूहे त्रकट्यौ स्तः । गोत्रा । रथकट्या ।

+ पुरुषात् कृताद्यवयविकारे च ढञ् ॥ ५९ ॥ पुरुषात् ढञ् स्यात् समूहे कृताद्यर्थे च । पुरुषाणां समूहः पौरुषेयं । पुरुषैः कृतः पौरुषेयः ग्रन्थः । पुरुषाय हितः पौरुषेयः पौरुषमाश्च । पुरुषस्य

विकारो वधो वा पौरुषय ।

* पितृमातुर्व्योस्डुङ् भ्रातरि ॥ ६० ॥ आभ्यां यथासंख्यं व्य डुङ् इत्येतौ स्तः भ्रातरि वाच्ये । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः ।

* डामहट् पित्रोः ॥ ६१ ॥ ताभ्यां पित्रो र्वाच्ययोर्डामहट् स्यात् । पितुः पिता पितामहः । पितुर्माता पितामही । मातुः पिता मातामहः । मातुर्माता मातामही ।

क्षीरेऽश्व सोढदूसमरीसाः ॥ ६२ ॥ अवि शब्दात्षष्ठीसमर्थात् क्षीरेऽर्थे सोढादयः स्युः । अवे क्षीरं अविसोढं । अविदूसं । अविमरीसं ।

+ वीराद्येमोविरोधे योऽम् ॥६३॥ वीरा देर्बासि विरोधे चार्थे योऽम् च स्यात् । वीरस्य तेजो वीर्यं । वीरस्य विरोधः—वैरं ।

*राष्ट्रेऽनंगादिभ्य ॥ ६४ ॥ तासमर्थाद् अंगादिवर्जितात् राष्ट्रेऽर्थे अण् स्यात् । शिवीनां राष्ट्रं शैवं । गांधारीणां गांधारं । उपुष्ठानां—औपुष्टं । आभिसारं । अनंगादिभ्य इति किं ? अंगानां राष्ट्रं । बंगानां राष्ट्रमिति वाक्यमेव ।

मौरिकैषुकार्यादेर्विधभक्तं ॥६५॥ मौरि क्यादेः ऐषुकार्यादेश्च राष्ट्रे यथासंख्यं विधभक्तौ स्यौ स्तः । मौरिकीणां राष्ट्रं मौरिकिविधं । मौकिकिविधं । ऐषुकारिभक्तं । सारस्यायनभक्तं ।

राजन्यादिभ्यो वुञ् ॥ ६६ ॥ एभ्यः राष्ट्रे ऽर्थे वुञ् भवति । राजन्यानां राष्ट्रं राजन्यकं । दैवयातकं । शाक्कायनकं ।

+वसातेर्वा ॥६७॥ वसातिशब्दात् वुञ् वा स्यात् । वसातीनां राष्ट्रं वासातकं । वासातं ।

तदस्मिन् युद्धे योद्धप्रयोजनम् ॥ ६८ ॥ तदिति वासमर्थात् योद्धृवाचिनोऽथवाचिनश्चा स्मिन्निति इतिबर्षे यथाविहितं त्यो भवति युद्धे गम्य माने । विद्याधरा योद्धारोऽस्मिन् युद्धे—वैद्याधरं । कौरवं । भारतं युद्धं । सुलोचनाऽर्थ प्रयोजन मस्मिन् युद्धे सौलोचनं । स्वायंप्रभं । सौतारं ।

प्रहरणात् क्रीडायां णः ॥ ६९ ॥ तासम र्थात् प्रहरणवाचिनः इत्यर्थे णो भवति क्रीडायां । दंडा प्रहरणमस्यां क्रीडायां दांडा । मौष्टा । पादा । क्रीडायामिति किं ? खड्गः प्रहरणमस्मिन् युद्धे ।

+भावघञोऽस्यां ॥७०॥ भावे यो घञ् तदं तात् तासमर्थात् अस्यामितीतरर्थे णस्य स्यात् । श्येनपाताऽस्यां वर्तते श्यैनंपाता तिलपाता मौष्टिपाता मृगि । भावग्रहणं किं ? प्राकारोऽस्यां ।

श्यैनंपातातैलंपाता ॥ ७१ ॥ एतौ शब्दौ निपात्यौ । श्येनानामिव पातोऽस्यां क्रीडायां वर्तते श्यैनंपाता । तिलानामिव पातोऽस्यां तैलं-पाता । श्येनतिलयोः पाते णपरे मुम् निपात्य ।

तद्वेत्त्यधीते ॥ ७२ ॥ तदिति इप्समर्थात् वेत्त्यधीत इत्येतयोरर्थयोर्यथाविहितं त्यो भवति । व्याकरणं वेत्त्यधीते वा वैयाकरणः । चैद्धांत । छांदस ।

पदकल्पलक्षणांतासख्यानाख्यायिकाक्रतू क्थादेष्ठण् ॥ ७३ ॥ पदकल्पलक्षणांतेभ्य आख्यानाख्यायिकाक्रतुवाचिभ्यः उक्थादिभ्य श्चेप्समर्थेभ्य ठण् भवति । पूर्वपदं वेत्त्यधीते वा पौर्वपदिकं । औत्तरपदिकः । मातृकल्पिकः । पाराशरकल्पिकः । गौलक्षणिकः । आश्वलक्ष णिकः । यवक्रीतमाख्यानं वेत्त्यधीते वा यावक्री तिकः । आधिमाराकिकः । वासवदत्तां आख्या यिकां वेत्त्यधीते वा वासवदत्तिकः । सौमनोहरि कः । क्रतु—आग्निष्टोमिकः । वाजपेयिकः । उक्थं वेत्त्यधीते वा औक्थिकः । याज्ञिकः । नैया यिकः । नैमासिकः । पौराणिकः । काशपिकः ।

+ अकल्पात् सूत्रात् ॥७४॥ कल्पवर्जिता त् सूत्रांतात् ठण् स्यात् । वार्तिसूत्रं वेत्त्यधीते वा वार्तिसूत्रिकः । सांस्कार्मसूत्रिकः । अकल्पादिति

किं ? कास्पसूत्रः ।

× मद्रिसत्रोगमसंसर्गाद् विधाया ॥७५॥ म्यादिवर्जिताद् विद्यातात ठञ् स्यात् । वायसविद्यां वेत्यधीते वा वायसविद्यिक । सार्पविधिक । अम्यादरिति किं ? म्यवयया विद्या त्रिविधा तां वेत्यधीते वा त्रैविधः । क्षात्रविद्याः धांगविद्य । धार्मविद्य । सांसर्गविद्य ।

याज्ञिकौक्थिकलौकायतिकाद्युप्रासाणि ॥ ७६ ॥ याज्ञिकादयो निपात्यंते । याज्ञिकस्य वेत्यधीते वा याज्ञिक । ठञ् इकृपर्वं च निपात्यते । औक्थिकमं-औक्थिकः । लोकायत-लौकायतिक । ठणि यकाराकारस्येलं । अनुब्राह्मणी । अनुब्राह्मणिना । इन् ।

× शतपष्ट' पथष्टद्॥७७॥ आभ्यां परो य पथिन्शब्दः तदंताद वेत्यधीते चार्थे ठट्‌ भवति । शतपथं वेत्यधीते वा शतपथिक' । षष्टिपथिक । + पदाद्युत्तरपदम्याम् ॥ ७८ ॥ पदशब्द' उत्तरपदं यस्य तस्मात् पदात् उत्तरपदात् पदोत्तरपदाच्च ठो भवति । पूर्वपदं वेत्यधीते वा पूर्वपदिक । पदिक । उत्तरपदिक । प्रथमोत्तरपदिक ।

क्रमादेर्वुन् ॥ ७९ ॥ क्रमादेर्वुन् स्यात् । क्रमं वेत्यधीते वा क्रमक । शिक्षक । पदक ।

+ ससर्वादेरण् ॥ ८० ॥ सादे सर्वादेश्च दाति अधीते चार्थे स्यस्योप् भवति । सवार्तिक । सग्रह' । अण उप् । सर्वविद । सर्ववेद । ठण उप् ।

० रियकात सूत्रात् ॥ ८१ ॥ स्पिर्सकाल य को विदिय तदंतात सूत्रे वर्तमानात् वेत्त्य धीते चार्थ स्यस्योप् भवतिर्वाभ्यामा परिमाणम स्यादि पंचकं सूत्रे तद्विदस्त्यधीयते वा पैचका जैनेद्रा । अष्टका पाणिनीया । द्वादशका आहता । स्पिमहण किं ? तास्त्रावबार्तिका ।

मोक्षात् ॥ ८२ ॥ मोक्षस्मात् विहित स्य वदिमधर्येत्सोप् भवति । गौतमेन मोक्तं गौतम । तद्वेत्त्यधीते वा गौतम । सुधर्मणा मोक्तं सौधर्म । तद्वेत्त्यधीते वा सौधर्म । माद्रबाहव ।

* वेदेनब्राह्मणं ॥ ८३ ॥ वेदवाचिमोक्षर्थ इन्नते च ब्राह्मणवाचि वदिमध्येरोरेव मयुज्यते नान्यत्र । कठेन मोक्तं वदं छंदो वेत्त्यधीते वा कठ । मोदेन—मौद । इन्-ब्राह्मण-ताण्डिन मोक्तं ब्राह्मणं विदंति अधीयते वा ताण्डिन । भाल्लविन । ऐतारायिण । इन्महणं किं ? याज्ञवल्क्येन मोक्तानि याज्ञवल्कानि ब्राह्मणानि ।

* सोऽस्यास्तीति देश स्रौ ॥ ८४ ॥ स इति वासमर्थात् अस्तीत्यर्थे यथाविहितं स्यो भवति यो वाऽर्थः स चेदस्तीति भवति तच्चेत्तदेश-निर्दिष्ट स चेद्देशः सुविषये । इतिकरणो मू माविविषये विवक्षार्थ । उदुंबरा अस्मिन् देशे संति औदुंबरः । बाल्बजः । पार्वतः ।

तेन निर्वृत्तः ॥ ८५ ॥ तेनेति भा समर्थात निर्वृत्त इत्येतस्मिन्नर्थे यथाविहितं स्यो भवति देशः स्रौ । कुशाम्बेन निर्वृता कौशाम्बी नगरी । काकंदी । माकंदी । सागर ।

तस्य निवासादूरभवौ ॥ ८६ ॥ त स्येति तासमर्थात् निवासादूरभव इत्येतयोरर्थयो' यथाविहितं स्यो भवति । ऋजुनावो निवास आर्जुनावं । सक्लायाः-साकलं नगरं । वाराणसा अदूरभवा—वाराणसी । विदिशाया —वैदिशं ।

वुञ्छणकठलसेयकण्ययफक्फिञिञ्-फणठणोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणम-माद्यमसखिसंकाश्यवलपक्षकर्णसुतंगमवराह-कुमुदादिभ्यः ॥ ८७ ॥ अरीहणादिभ्यः पञ्चदशेभ्यो यथासंख्यं वुञादयः षोडश स्याश्चातुरर्थिका भवति । अरीहणेन निर्वृत्तं

स्यात् । गोष्ठ्यां जात-गौष्ठ । तैकी । तैकः । गौमती । गौमत ।

* सकलादर्गोत्रे ॥१२०॥ सकलादेर्गोत्रे मन्त्यो विहित इदंतादर्थेऽञ् स्यात् । सकल स्यापत्य साकल्यस्तस्येमे छात्राः साकलाः । काठा । गौकक्षा । गोत्र इति किं ? सकलो देवताऽस्येति साकलस्तस्यम साकलीया ।

इञः ॥१२१॥ गोत्रे य इञ् तदंतादण् स्यात् शेषेऽर्थे । दाक्षेः छात्राः दाक्षा । माहाका ।

न द्व्यचः प्राग्भरतेषु ॥ १२२ ॥ द्व्यचः इञेत यत् प्राग्गोत्रे भरतगोत्रे च वर्तते तस्मादण् न स्यात् । पैकेरिमे छात्राः पैकीया । पौष्पीयाः । भरतेषु—काशेरिमे काशीया । वासीयाः । द्व्यच इति किं ? पान्नागारेः छात्रा पान्नागारा । प्राग्भरतेष्विति किं ? दाक्षाः ।

भवतष्ठण्छसौ ॥ १२३ ॥ भवतात् शेषेऽर्थे ठण्छसौ स्यौ स्त । भवतो भवत्या वाऽयमाव त्कः । भवदीय ।

+ जनपरराज्ञ-कञ्च॥१२४॥एभ्यः शेष कञ्च भवति । जनस्येदं जनकीयं । परकीयं । राज कीयं । स्वदेशयोरप्यत्र ग्रहणमिति केचित् । स्वकीयं । दवकीयं ।

दोश्छः ॥१२५॥ दुसंज्ञकात् शेषे छो भवति तस्याय तदीय । मदीय । गार्गीय । स्वार्य भगीयः । भाद्रीय ।

+ शीवादिभ्य कालात् ॥ १२६ ॥ शीता दिभ्य परो य कालशब्दस्तदंतादर्थेऽर्थे छो भवति । शीतकालीयं । उष्णकालीयं ।

+ व्यादिभ्यष्ठञिकठौ ॥ १२७ ॥ विमभृति भ्य परो य कालशब्दस्तदंतात्शेषे ठञिकठौ स्तौ स्तः । वैकालिकः । वैकालिकी । वैकालिका । आनुकालिक । आनुकालिकी । आनुकालिका ।

*काश्यादेः॥१२८॥काशिप्रभृतिभ्या दुभ्य शेषे ठञिकठौ स्तः । काश्यां जातः—काशिकः । काशिकी । काशिका । वैदिक । वैदिकी । वैदिका ।

वाहीकग्रामेभ्यः ॥१२९॥ वाहीकदेशग्राम वाचिभ्यो दुभ्यः शेषेऽर्थे तौ स्त । शाकले जातो भवो वा शाकलिक । शाकलिकी । शाकलिका । मांमविकः । मांमविकी । मांमविका । कारठ पिक । कारठपिकी । कारठपिका ।

वोशीनरेषु ॥ १३० ॥ उशीनरेषु ये ग्रामाः तद्वाचिभ्यस्तौ वा स्त । आह्कालिषु जाता भवा वा आह्कालिकी । आह्कालिका आह्कालीया । सौदर्शनिका । सौदर्शनिकी । सौदर्शनीया ।

आर्देवे ठञ् ॥ १३१ ॥ उवर्णान्ताद्देश वाचिनष्ठञ् स्यात् । शबरजम्बां जातो भवो वा शाबरजंबुक । नैषादकर्षुकः । देश इति किं ? पटोश्छात्रा पाटवा ।

दोरेव प्राचा ॥ १३२ ॥ उवर्णान्ताद्दो प्राचां देशवाचिनो दुसंज्ञादेव ठञ् स्यात् शेष । आढक-जम्बां जात आढकजंबुक । नापितवास्तुक । नियमोऽयं प्राचां दोरेव—मास्तवास्तव ।

कंथायाः ॥ १३३ ॥ कन्थायाः शेषे ठञ् स्यात् । कन्थाया जातो भवो वा कान्थिका गौः ।

वर्णौ वुञ् ॥ १३४ ॥ वर्णौ जनपदे या कन्था तस्या वुञ् भवति । कान्थकोऽश्व ।

धन्वयोपध्पुरवहांतात् ॥१३५॥ धन्व वाचिनो यकारोपधात् प्रस्थपुरवहान्तेभ्यश्च देश वाचिनो दोर्वुञ् स्यात् । पारेधन्वनि जात पारे धन्वकः । आपारेधन्वकः । ऐरावतक । योप् सांकाश्ये भव सांकाश्यकः । कांपिल्यकः । माकमस्थकः । नांदीपुरक । फाल्गुनी वहक ।

गहीय ।मतस्तीय।क्षमीय ।विषमीय ।उपमीय ।

* दो कस्ताद्कंथाफलदनगरग्रामह्रदयो ॥ १५४ ॥ दोः कोक सोक कमादिपोश्च छो भवति । आरीहणके जातो भवो वा आरीहण कीयः । ब्राह्मणकीय । कौटिशिर्सीयः । माटि शिसीयः । दाक्षिकथीयः । माहिकक्षीयः । दाक्षिकन्थीयः । माहिकिनगरीय । दाक्षिग्रा मीय । गोमयह्रदीय । दधिह्रदीयः ।

माचां कच्छादे ॥ १५५ ॥ माचां दे शवाचिन कटादे छो भवति शेषे । कटनगरीय । कटग्रामीय ।

+ पर्णकृकणाद् भारद्वाजे ॥१५६ ॥ आभ्यां भारद्वाजदेशवाचिभ्यां छो भवति शेषे । पर्णीयः। कृकणीय । पाणः । कार्कणोऽन्यत्र ।

पर्वतान्मर्त्ये ॥ १५७ ॥ पर्वताच्छो भवति मर्त्ये । पर्वते जातः पर्वतीया मनुष्य ।

वा ॥ १५८ ॥ पर्वताच्छपे छो वा स्यात् शेषे । पर्वतीयमुदकं । पार्वत फलं वा ।

+ वेणुकादिभ्य छण् ॥ १५९ ॥ एभ्यः देशवाचिभ्यः छण् स्यात् शेषे । वैणुकीय । वैत्रकीय ।

युस्मदस्मदोऽकञ् वाऽस्मत्कौ ॥ १६० ॥ आभ्यां अञ्चमौ वा स्तः सर्वत्रनियोगे तयोः अककादेशश्च । युष्माकं युवयोर्वाऽयं यौष्माक । यौष्माकीण । युष्मदीय । आस्माक । आ स्माकीनः । अस्मदीय ।

तवकममकमेकार्थे ॥ १६१ ॥ तयोस्तव कममकावादेशौ स्त एकार्थे अञ्खञोः परत । तवायं तावक ।तावकीन ।मामक। मामकीन ।

योऽर्धात् ॥ १६२ ॥ अर्धात् यो भवति शेषे । अर्धे भवं अर्ध्यं ।

+ सावेरण्ण ॥ १६३ ॥ सावेरर्धाट्ठण् स्यात् शेषे । पुष्करार्द्धे भव पौष्करार्द्धिकः । वैभ मार्द्धिक ।

* दिगादेस्तौ ॥१६४॥ दिगादेरर्धात् यठणौ स्तौ स्त । पूर्वार्ध्यं । पौर्वार्द्धिक । दक्षिणा र्ध्य । दाक्षिणार्द्धिक ।

ग्रामराष्ट्रस्याणठणौ ॥ १६५ ॥ ग्रामस्य राष्ट्रस्य चार्धात् दिगादरणठणौ स्त । ग्रामस्य राष्ट्रस्य वा पूर्वार्धे भव पौर्वार्द्ध । पौर्वा र्द्धिक । अपरार्द्ध जातो भवा वा पाश्चार्द्धः । पाश्चार्द्धिक ।

परावरधमोत्तमादेय ॥१६६॥ परादिपूर्वा दर्धात् यो भवति । परार्ध्यं । अवरार्ध्यं । अधमार्ध्यं । उत्तमार्ध्यं ।

+अवास्योऽधसोऽम ॥१६७॥ एभ्य अमो भवति । अन्तमः । अवम । अधम ।

+ लोकमध्यात्मादिभ्यष्ठण्॥१६८॥ लोक योरध्यात्मादिभ्यश्च ठण् स्यात् । इह लोके जात भवो वा ऐहलौकिक । पारलौकिक । आध्या त्मं भवं आध्यात्मिक । आधिदैविकं । ऐहिक ।

+ समानादादेश्च ॥१६९॥ समानात् समा नादेश्च ठण् स्यात् । समाने भवाः सामानिकाः देवा । सामानग्रामिक ।

ऊर्ध्वाद्दमदेहात् ॥ १७० ॥ ऊर्ध्वात् पराभ्यां दमदेहाभ्यां ठण् स्यात् । ऊर्ध्वात् दमो दमादूर्ध्वं वा ऊर्ध्वदमः। तत्र भवः और्ध्वदमिक । और्ध्व देहिक ।

+वर्षाकालेभ्यः ॥१७१॥ वर्षाशब्दात् काल वाचिभ्यश्च ठण् स्यात् । वर्षासु भवो वार्षिक । पूर्ववार्षिक । मासिक । आर्द्धमासिक । सांव त्सरिक ।

कर्मणि भावे शरद ॥१७२॥ शरच्छब्दा त् भावे कर्मणि ठण् स्यात् । शारदिकं श्राद्धं ।

राजीताः माचां ॥१३६॥ राज इकारांताच दा माम्देशवाचिनो वुम् स्यात् । पाटलिपुत्रक । एकचक्रक । कर्कंदी-कार्कंदकः । मार्कंदक ।

* राष्ट्रन्य ॥१३७॥ राष्ट्रवाचिना देशात् योर्वुम स्यात् । आभिसारक । आदर्शक । लौपुरक ।

* बहुषु ॥१३८॥ राज्यवाचिनो देशात् बहु विषयाद् वुम् स्यात् शेषे । अगपु जातो मवो वा-आंगक । वांगकः । दार्वक । आभमीरक ।

कच्छादिवक्रूसयो ॥ १३९ ॥ कच्छा-दिपार्वेसवाचिना वुम् स्यात् शपर्थे । मरुकच्छे जातो मवो वा मारुकच्छकः । पैप्पिलिकच्छक । कांदामक । वैशुजामक । ऐंदुवकक तैंदुवकक । वाहुवर्धकः । वाक्रवर्धकः ।

धूमादे ॥ १४ ॥ धूमादिभ्यो देशवाचि भ्यो वुम् स्यात् शेषे । धौमक । गार्तक । वैपक । काशक ।

* कूलात् सौवीरेषु ॥१४१॥सौवीरेषु भामात् कूलात् वुम् स्यात् शेषेऽर्थे कौलकः । कौलाऽन्यत्र

+ समुद्रान्नौनरा ॥ १४२ ॥ समुद्रशब्दाद्देश वाचिनो वुम् स्यात् शेषे स चेत् नौ ना वा भव ति । सामुद्रिका नौः । सामुद्रको मनुष्य । अ न्यत्र-सामुद्रं लवणं ।

नगरात् कुत्सादाक्ष्ये ॥ १४३ ॥ नगरा देशवाचकाच्छेषे वुम् स्यात् कुत्सायां दाक्ष्ये च । केनायं पुरुषो मुषित इह नगरे मनुष्येण समाम्यत एतन्नागरक चौरा हि नागरका भवति। केनयं वीणा वादिता । इह नगरे मनुष्येण उप पचते एतन्नागरके निपुणा हि नागरका भवति ॥ कुत्सादाक्ष्ये इति किं ? नागर पुरुष ।

+नृपत्म्यप्यायन्यायविहारेमेऽरण्यात्॥१४४॥ अरण्यादेशवाचिनो वुम् स्यात् शेषे नार्थे । आ रण्यका ना पंथा अध्यायः न्यायः, विहार, हस्ती वा । आरण्या औषधयाऽन्यत्र ।

+ वा गोमय ॥ १४५ ॥ अरण्यशब्दाद्देश वाचिनो वुम् वा स्यात् शेषे गोमये । आरण्य क । आरण्य गोमयः ।

कुरुयुगंधरात् ॥ १४६ ॥ आभ्यां देशवा चिभ्यां वुम् स्यात् वा । कुरुषु जातो भवो वा कौरवक । कौरव । यौगंधरक, यौगधरः ।

धूमिमद्रात् क ॥ १४७ ॥ आभ्यां देशवाचिभ्यां शेषे को भवति । धूमिक । मद्रका ।

कोटाऽञ् ॥ १४८ ॥ कोको देशवा चिनोऽञ् स्यात् । मार्धिकेषु जात-मार्धिक मारि पिक । मारमक ।

कच्छादेः ॥ १४९ ॥ कच्छादिभ्योऽञ् स्यात् शेषे । काच्छः । सैंधव । वार्णव ।

नृवस्त्य च वुञ् ॥ १५० ॥ नरि हस्ते च कच्छादर्वुञ् स्यात् । काच्छको ना । अ-च्छकमस्य वस्थितं हसितं । काच्छिका चूडा । पर्व-सैंधको ना ।

मायवागपदौ शाल्वात् ॥ १५१ ॥ शा ल्वाद्देशवाचिन शेषे वुञ् स्यात् गवि यवाग्वां अपदौ च । शाल्वको गौः । शाल्विका यवागू शाल्वको मनुष्य । पद्मिति किं ? शाल्वाः व्रीहयः । शाल्व पथि ।

* पृथिवीमध्यान्निवासाचरणेऽञ् मध्यमश्च ॥ १५२ ॥ पृथिवीमध्यशब्दात् निवासभूता चरणे कठादौ अञ् स्यात् । मध्यमश्चास्यादेशः। पृथिवीमध्ये जातो भवो वा माध्यम कठादिः । निवासादिति किं ? मध्यमीय ।

गर्तयुगहादिभ्यः ॥ १५३ ॥ गर्तशब्दः ग हादिभ्यश्च छो भवति । स्वाविद्गर्ते जातो भवो वा स्वाविद्गर्तीयः। वृकगर्तीयः । शृगालगर्तीय ।

गहीय ।मतम्बीय ।समीय ।विषमीय ।उत्तमीय ।

* द्रो फल्वोत्कयाफलदनगरग्रामह्रदयो ॥ १५४ ॥ योः कोक सोक' कंथादियोश्च छो भवति । भारीहणके जातो भवो वा आरीहण कीयः । ग्रामणकीय । कौटिशिलीयः । माटि शिलीयः । दाक्षिकथीयः । माहिककर्थीयः । दाक्षिफल्दीयः । माहिकिनगरीय । दाक्षिग्रा मीय । गोमयह्रदीय । दधिह्रदीयः ।

माधो कन्थादे' ॥ १५५ ॥ माधो दे शवाचिन' कन्थादे छो भवति शेषे। कटनगरीय । कटग्रामीय ।

+ पर्णकृकणाद् भारद्वाजे ॥१५६ ॥ आभ्यां भारद्वाजदेशवाचिभ्यां छो भवति शेषे । पर्णीयः। कृकणीय । पाणः । कार्कणोऽन्यत्र ।

पर्वतान्मर्त्ये ॥ १५७ ॥ पर्वताच्छो भवति मर्त्ये । पर्वते भातः पर्वतीया मनुष्य ।

वा ॥ १५८ ॥ पर्वताच्छपे छो वा स्यात् शेषे । पर्वतीयमुदकं । पार्वतं फलं वा ।

+ वेणुकादिभ्य छण् ॥ १५९ ॥ एभ्यः देशवाचिभ्यः छण् स्यात् शेषे । वैणुकीय । वैत्रकीय ।

युस्मदस्मदोऽञ्खञ् चाऽयमसखौ ॥ १६० ॥ आभ्यां अञ्सञौ वा स्तः तत्संनियोगे तयोः अककादेशश्च । युष्माकं युवयोवाऽयं यौष्माक । यौष्माकीणः । युष्मदीय । आस्माक । आ स्माकीनः । अस्मदीय' ।

तवकममकमेकार्थे ॥ १६१ ॥ तयोस्तव कममकावादशौ स्त एकार्थे अञ्खञो' परत । तवार्य तावक तावकीम मामकः। मामकीन' ।

योऽर्द्धात् ॥ १६२ ॥ अर्द्धाद् यो भवति शेषे । अर्द्धे भवं अर्द्धय ।

+ सादेष्ठण ॥ १६३ ॥ सादेरर्द्धाट्ठण् स्यात् शेषे । पुष्करार्द्धे भवं पौष्करार्द्धिकः । वैज यार्द्धिक ।

* दिगादेस्तौ ॥१६४॥ दिगादेरर्द्धात् यठणौ स्तौ स्त' । पूर्वार्द्ध्य । पौर्वार्द्धिक । दक्षिणा र्द्ध्य । दाक्षिणार्द्धिक ।

ग्रामराष्ट्रस्याणठणौ ॥ १६५ ॥ ग्रामस्य राष्ट्रस्य चार्द्धात् दिगादरण्ठणौ स्त । ग्रामस्य राष्ट्रस्य वा पूर्वार्द्धे भव पौर्वार्द्ध' । पौर्वा र्द्धिक । अपरार्द्धे जातो भवो वा पाश्चार्द्धः । पाश्चार्द्धिक ।

परावरधमोत्तमादेर्य ॥१६६॥ परादिपूर्वा दर्द्धात् यो भवति । परार्द्ध्य । अवरार्द्ध्य । अधमार्द्ध्य । उत्तमार्द्ध्य ।

+मताग्मोऽग्रसोऽग्मः ॥१६७॥ एभ्य अमो भवति । अग्रमः । अवम । अधम ।

+ लोकाध्यात्मादिभ्यष्ठण ॥१६८॥ लोक योरध्यात्मादिभ्यश्च ठण् स्यात् । इह लोके जात भवो वा ऐहलौकिक' । पारलौकिक । आध्या- त्मे भव आध्यात्मिक । आधिदैविक । पारिक ।

+ समानादादेश ॥१६९॥ समानात् समा नादेश ठण् स्यात् । समाने भवाः सामानिकाः देवा । सामानग्रामिक' ।

ऊर्ध्वाद्दमदेहात ॥ १७० ॥ ऊर्ध्वात् पराभ्यां दमदेहाभ्यां ठण् स्यात् । ऊर्ध्वाद् दमो दमादूर्ध्व वा ऊर्ध्वदमः। तत्र भवः और्ध्वदमिक । और्ध्व देहिक ।

+वर्षाकालेभ्यः ॥१७१॥ वर्षाशब्दात् काल- वाचिभ्यश्च ठण् स्यात् । वर्षासु भवो वार्षिक । पूर्ववार्षिक । मासिक । आर्द्धमासिकः । सांव त्सरिक ।

कर्मणि भावे शरद ॥१७२॥ शरच्छब्दा त् भावे कर्मणि ठण् स्यात् । शारदिकं श्राद्ध ।

रोहीतः भार्या ॥१३६॥ राज ईकारान्तात्‌ वा मान्यदेशवाचिनो वुम्‌ स्यात्‌ । पाटलिपुत्रक । एकचक्रक । काकन्दी-काकंदका । माकंदक ।

* राष्ट्रम्य ॥१३७॥ राष्ट्रवाचिना वत्वात्‌ वार्युश्‌ स्यात्‌ । आभिसारक । आदर्शक । औपुरक ।

* बहुषु ॥१३८॥ राष्ट्रवाचिनो देशात्‌ बहु विषयात्‌ वुम्‌ स्यात्‌ शेषे । अंगेषु जातो भवो वा आंगक । वांगका । दार्वक । आजमीढक ।

कच्छाग्निवक्त्रमवतयो ॥ १३९ ॥ कच्छा विपादेशवाचिना वुम स्यात्‌ शेषेऽर्थे । मरुकच्छ जातो भवो वा मारुकच्छक । वैणिकच्छक । कांडामक । वैणुजामक । ऐंदुवक्त्रक । वैंदुवक्त्रक । वाहुवर्तकः । वाक्रवर्तकः ।

धूमादे ॥ १४० ॥ धूमादिभ्यो देशवाचिभ्यो वुम्‌ स्यात्‌ शेषे । धौमक । गार्तक । तैर्थक । कासक ।

* कुसात्‌ सौवीरेषु ॥१४१॥सौवीरेषु ग्रामात्‌ कूलात्‌ वुम्‌ स्यात्‌ शेषेऽर्थे कौलकः । कौलाऽन्यत्र ।

+ समुद्रान्नौका ॥ १४२ ॥ समुद्रशब्दाद्देश वाचिनो वुम्‌ स्यात्‌ शेषे स चेत्‌ नौ ना वा भव ति । सामुद्रिका नौ । सामुद्रको मनुष्य । अ न्यत्र—सामुद्रं लवणं ।

नगरात्‌ कुत्साद्दाक्ष्ये ॥ १४३ ॥ नगर देशवाचकाच्छेषे वुम्‌ स्यात्‌ कुत्सायां दाक्ष्ये च । केनायं पुरुषो मुषित इह नगरे मनुष्येण तस्मान्मत एतन्नागरके चोरा हि नागरका भवति। कनयं वीणा वादिता । इह नगरे मनुष्येण उप पद्यते एतन्नागरके निपुणा हि नागरका भवति ॥ कुत्सादाक्ष्ये इति किं ? नागर पुरुष ।

+नृपध्यध्यायन्यायविहारमेभ्यात्‌॥१४४॥ अरण्यादेशवाचिनो वुम्‌ स्यात्‌ शेषे मार्गे ।आ रण्यका ना पथा अध्यायः न्यायः, विहार, हस्ती वा । आरण्या औषधयोऽन्यत्र ।

+ वा गोमय ॥ १४५ ॥ अरण्यशब्दाद्देश वाचिनो वुम्‌ वा स्यात्‌ शेषे गोमये । आरण्य क । आरण्य गोमयः ।

कुरुयुगंधरात्‌ ॥ १४६ ॥ आभ्यां देशवा- चिभ्यां वुम्‌ स्यात्‌ वा । कुरुषु जातो भवो वा कौरवक । कौरव । यौगंधरक, यौगंधर ।

इगिमद्रात्‌ क ॥ १४७ ॥ आभ्यां देशवाचिभ्यां शेषे का भवति । वृजिक । मद्रक ।

कोपादण्‌ ॥ १४८ ॥ कोपे देशवा- चिनोऽण्‌ स्यात्‌ । ऋषिकेषु जात—आर्षिक ।माहि षिक । आश्मक ।

कच्छादः ॥ १४९ ॥ कच्छादिभ्योऽण्‌ स्यात्‌ शेषे । काच्छ । सैंधव । वार्णव ।

नृवत्स्य च वुम्‌ ॥ १५० ॥ यदि वस्ते च कच्छादर्वुम्‌ स्यात्‌ । काच्छको ना । का च्छकमस्य जल्पित हसितं । काच्छिका चूडा । एवं—सैंधका ना ।

गोयवागपत्ौ साल्वात ॥ १५१ ॥ सा ल्वादेशवाचिन शेषे वुम्‌ स्यात्‌ गवि यवाग्वां अपत्ौ च । साल्वको गौः । साल्विका यवागू साल्वका मनुष्य । एष्विति किं ? साल्वाः मीढवः । साल्वः पथि ।

* पृथिवीमध्यान्निवासाचरणेऽण्‌ मध्यमश्च ॥ १५२ ॥ पृथिवीमध्यशब्दात्‌ निवासभूता चरणे कठादौ अण्‌ स्यात्‌ । मध्यमश्चास्यादेशः। पृथिवीमध्य जातो भवो वा माध्यम कठादिः । निवासादिति किं ? मध्यमीय ।

गर्तयुगहादिभ्यः ॥ १५३ ॥ गर्तयो य हादिभ्यश्च छो भवति । स्वाविद्गर्ते जातो भवो वा स्वाविद्गर्तीय । वृकगर्तीयः । शृगालगर्तीय ।

इक । अपराह्णक । आद्रक । मूलक । प्रदोषकः । अवस्करक । सिंधुका । अपकरक ।

* पथकः ॥ ६ ॥ पथिन्शब्दात् को निपात्य पथादेशश्च । पथि जातः पथकः ।

वाऽमावास्यायाः ॥ ७ ॥ अमावास्याशब्दात् को वा स्यात् । अमावास्यक । आमावास्य ।

* अविष्ठाषाढाभ्यां ॥ ८ ॥ आभ्यां तस्याश्च अस्यो भवति । श्रविष्ठासु जातः श्रविष्ठ । आषाढ । अमावास्य ।

* छण् ॥ ९ ॥ आभ्यां छण् स्यात् । श्राविष्ठीय । आषाढीय ।

फल्गुन्याष्टः ॥ १० ॥ फल्गुनीशब्दाट्टो भवति । फल्गुन्यां जात—फल्गुन । फल्गुनी ।

पुष्यार्थपुनर्वसुस्वात्यनुराधाविशाखाबहुलाहस्ताद्वुण् ॥ ११ ॥ पुष्यार्थेभ्य पुनर्वस्वादिभ्यश्च माण तण् स्यात् तत्र जातार्थे । पुष्ये जात पुष्य । तिष्य । सिध्य । पुनर्वसु । स्वाति । अनुराध । विशाख । बहुल । हस्त ।

* चित्रारेवतीरोहिण्या स्त्रियां ॥ १२ ॥ चित्रादिभ्यो माण स्त्रियामुण् स्यात् स्त्री । चित्रायां जाता चित्रा । रेवती । रोहिणी स्त्री । स्त्रियामिति किं ? चैत्र ।

* वाऽन्यत ॥ १३ ॥ अविष्ठादिभ्योऽन्येभ्यो भेभ्यो माण उण् वा भवति । अभिजिति जात अभिजित् । आभिजित । अश्वयुक् आश्वयुज । शतभिषक्, शातभिषज । कृत्तिक, कार्त्तिक । मृगशीर्ष, मार्गशीर्ष ।

* वत्साच्छालात् ॥ १४ ॥ वत्सपूर्वात् शालात् परस्य जातार्थे उत्पन्नस्याण उब्वा भवति । वत्सशालासु जात—वात्सशाल । वत्सशाल ।

* गाःस्थलात् ॥ १५ ॥ आभ्यां शालायुण् भवति । गोशाल । खरशाल ।

* स्थानान्तात् ॥ १६ ॥ स्थानान्तात् उण् भवति जातः सः । गोस्थान । अश्वस्थान ।

कृतलब्धक्रीतसंभूता ॥ १७ ॥ तत्रेति ईप्समर्थात् कृताद्यर्थेषु यथाविहितं त्यो भवति । स्रुघ्ने कृत लब्ध क्रीत संभूतो वा स्रौघ्न । माथुर । औत्स । राष्ट्रिय । पारीण । व्यापारापेक्षितव्यापार कृत । सामान्येन प्राप्तं लब्धं । मूल्येन प्राप्तं क्रीतं । संभूति संभावना । तत्कृतकर्मभूत सभूत ।

कुशल ॥ १८ ॥ ईप्समर्थात् कुशल इत्येतस्मिन्नर्थे यथाविहित त्यो भवति । स्रुघ्ने कुशल स्रौघ्न । नौघ ।

पथो वुन् ॥ १९ ॥ पथिन्शब्दात् वुन् स्यात् । पथि कुशल—पथक ।

* कोऽश्मादे ॥ २० ॥ अश्मन्प्रभृतिभ्य को भवति । अश्मनि कुशल अश्मक । सरक । माकीक ।

कालात्साधुपुष्प्यत्पच्यमाने ॥ २१ ॥ कालवाचकादीप्समर्थात् यथाविहितं त्यो भवति साध्वाद्यर्थेषु । हेमन्ते साधु हैमन प्राकार । वसंते पुष्प्यंति वासंत्यो लता । शरदि पच्यंते शारदा शालय ।

उप्ते ॥ २२ ॥ कालवाचकादीप्समर्थात् उप्तेऽर्थे यथाविहितं त्यो भवति । शरदुप्ता शारदा यवा । ग्रैष्मा शालय ।

आश्वयुज्या वुञ् ॥ २३ ॥ आश्वयुजीशब्दात् वुञ् स्यात् । आश्वयुज्यामुप्ता आश्वयुजका माषा ।

ग्रीष्मवसंताद्वा ॥ २४ ॥ आभ्यां वुञ् वा भवति उप्तेऽर्थे । ग्रैष्मक । ग्रैष्मा । वासंतक, वासंत सस्या ।

देयमृणे ॥ २५ ॥ कालवाचकादीप्समर्थात् देयमृण इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । मासे देयं ऋणं मासिक । सांवत्सरिकं ।

शाद इति किं । शारद दधि ।

वा रोगातपे ॥ १७३ ॥ शरद ठञ् वा स्यात् रोगे आतपे च । शरदि भवः शारदिक, शारदो रोग आतपो वा ।

निशाप्रदोषश्वसंतात् ॥१७४॥ एभ्यष्ठण् वा स्यात् शेषे । नैशिकः । नैश । प्रादोषिक । प्रादोष । हैमंतिकः । हैमंत ।

* से तोऽपि ॥१७५॥ हेमंतशब्दस्य सं वा भवत्यपि परत । हैमन । हैमंत ।

श्वसस्तुट् च ॥ १७६ ॥ श्वसशब्दात् ठञ् वा स्यात् । तस्य च तुट् आगमः। शौवस्तिक । श्वस्त्य । श्वस्तन ।

*पूर्वाह्णापराह्णात्तनट् ॥१७७॥ आभ्यां तनट् वा स्यात् । पूर्वाह्णे जातो भवो वा पूर्वाह्णेतन । पौर्वाह्णिकः । अपराह्णेतन । आपराह्णिक ।

सायंचिरमाह्णप्रगाव्ययात् ॥ १७८ ॥ सायमादेः शिभ्यश्च तनट् स्यात् । सायं जातो भवो वा सायंतनः । चिरंतन । माह्णेतन । प्रगेतन । अ—ध्यायतने प्रातस्तन । दिवातन । दोषातन ।

+ चिरपरुत्परारेस्त्नः ॥१७९॥ चिरादेस्त्नो भवति । चिरत्न । परुत्न । परारित्न ।

भर्संध्यापुष्यतुभ्योऽण् ॥१८० ॥ भेभ्यः संध्या शिभ्य ऋतुभ्योऽण् स्यात् । तिष्ये भव तैष । पौष । माघ । सांध्य । सांधिवेला । आमा वास्यः । ऋतो—ग्रैष्म । शैशिर । वासंत ।

+ संवत्सरात् पर्वफले॥ १८१ ॥ संवत्सरात् पर्वणि फले चाण् स्यात् । सांवत्सरं पर्व फलं वा ।

प्रावृष एण्यः ॥ १८२ ॥ प्रावृट्शब्दात् कालवाचिनःएण्यो भवति । प्रावृषेण्य बलाहकः ।

*द्वीपादनुसमुद्रं ण्यः ॥१८३॥ अन्वक्षौ समुद्र समीपे यो द्वीपः तस्मात् ण्यो भवति । द्वैप्य ।

+पश्चादग्रायंतादिमः ॥ १८४ ॥ एभ्य इमो भवति शेषे । पश्चिम । अग्रिम । आदिम । अंतिमः ।

मध्यान्म ॥ १८५ ॥ मध्यान्मो भवति शेषे । मध्यम ।

संमस्य ॥ १८६ ॥ संमस्ते मध्यात्मा भवति । माति स्थूलो माति कृशो मध्यः । नाति ह्रस्वो नाति दीर्घो च सोऽपि मध्यः ।

+ यामाजिनांताद्दुप् ॥१८७॥ यामांतात् अजिनांताच्च परस्य शैषिकस्य प्रत्ययस्य उप् भवति । अथस्थाम्नि जातः अश्वत्थामा । सिंहाजिन ।

इति जैनेंद्रापरनाम्नि शब्दार्णवव्याकरणे शब्दार्णवचंद्रिकायां लघुवृत्तौ तृतीयस्याध्यायस्य द्वितीय पादः

## तृतीय पाद

तत्र जात ॥ १ ॥ सप्तमीसमर्थात् जात इत्येतस्मिन्नर्थे यथाविहितं त्वा भवति । सत्र स्मिति अनपेक्षितपरव्यापार कर्तृभूतो जात । स्रुघ्ने जात स्रौघ्न । माथुर । औत्स । राष्ट्रिय । पारीण । ग्रामेय । ग्राम्य । बादेय ।

प्रावृषः ॥ २ ॥ अस्मात् ठ स्यात् । प्रावृषि जात प्रावृषिक ।

सौ शरदो वुञ् ॥ ३ ॥ शरदो वुञ् स्यात् सौ । शारदका मुद्गा । सावति किं । शारदं धान्यं ।

सिंधवपकराद्गुण् ॥ ४ ॥ आभ्यामण् स्यात् । सैंधव । आपकर ।

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करात्कः ॥५ एभ्यस्ताभ्यां च को भवति । पूर्वाह्णे जात पूर्वा-

ति । कवर्गीय । चवर्गीय ।

यत्खौ चाशब्दे । ४६ । वर्गान्ताद् यत्खौ स्त अशब्दे । भरतवर्ग्य । भरतवर्गीण । भरत वर्गीय । एवं—बाहुबलिवर्ग्य, बाहुबलिवर्गीण, बाहुबलिवर्गीयः । अशब्द इति किं ? टवर्गीय ॥

+ स्वेऽत्र:पुराट् । ४७ । स्वे विषये अतः पुराद् ठो भवति । अत पुरे भवा अत पुरिका स्त्री। स्व इति किं ? आत पुर ।

* कर्मसकाद्याद् क ॥४८॥ आभ्यां को भवति स्वे । कार्मिका । स्फाटिका भूषणविशेष ।

* तस्य व्याख्याने च प्रथाद् ॥४९॥ तस्येति तासमर्थाद् व्याख्यानेऽर्थे तत्र भवे च प्रथवाचकाद् यथाविहितं स्यो भवति । सुपां व्याख्याने सुप्सु भवं वा सौपं । मैडं । कार्तं । यथाविहिति किं ? पाटलिपुत्रस्य व्याख्यानी सुकोशला ।

* बह्वचठञ् प्रायः ॥५०॥ बह्वचो प्रथाद् ठञ् भवति प्रायः । पत्वणत्वस्य व्याख्यान तत्र भव वा पात्वणत्विकं । पाचहोतृकं । प्रायणिक । माधमिकं । नामाख्यातिकं । आमिष्टोमिकं । कपिल—संहितायाः व्याख्यानं संहितं । बहुच इत्येव—हार्दं ।

इपमृष ॥ ५१ ॥ इपवो मृदः ऋक् इत्येभ्यश्च ठञ् स्यात् । अयतस्य व्याख्यानं तत्र भवं वा आयिक । पौर्विकं । तार्किकं । आर्थिक । मामिकं । ऋक्—आर्चिकं ।

+ऋषिभ्योऽध्याये ॥ ५२ ॥ ऋषिवाचकेभ्यो प्रथवाचिभ्यष्ठञ् स्यात् अध्याये । वाशिष्ठस्य व्याख्यानं तत्र भवं वा वाशिष्ठिकोऽध्यायः । वैश्वामित्रिक ।

* पौरोडाशपुरोडाशाट्ठष्ठौ ॥ ५३ ॥ आभ्यां ठष्ठौ स्तो स्त । पौरोडाशिक । पौरोडाशिकी । पौरोडाशिका । पुरोडाशिक । पुरोडाशिकी । पुरोडाशिका ।

छन्दसो य ॥ ५४ ॥ छन्दसो यो भवति छन्दस्य ।

*शिक्षादेरण् ॥ ५५ ॥ शिक्षादिभ्य छन्दसश्च अण् स्यात् । शिक्षाया व्याख्यानं तत्र भवो वा शैक्ष । आगमन पादव्याख्यान छांदस ।

तत आगत ॥ ५६ ॥ तत इति कास-मर्थाद् आगत इत्यस्मिन्नर्थे यथाविहितं स्यो भवति । स्रुघ्नादागत -स्रौघ्न । राष्ट्रिय । माहिष्मत्र ।

यौनमौखात् वुञ् ॥ ५७ ॥ यौनेभ्यो मौखेभ्यश्च वुञ् भवति तत आगतेऽर्थे । मातुरा-गतं मातृकं । मातामहकं । औपाध्यायकं । आचार्यकं । ऋत्विज आगतं आर्त्विजकं ।

* वा पित्र्य ॥ ५८ ॥ पितृशब्दाद् यो वा निपात्य । पितुरागत पित्र्यं पैतृकं ।

* ऋष्ठण् ॥ ५९ ॥ ऋकारान्ताद् यौनमौखाद् ठण् स्यात्।मातुरागत मातृकं।भ्रातृकं।होतृकं।पैतृकं।

* आयस्थानात् ॥ ६० ॥ आयस्थानवाचकाद् ठञ् स्यात् । शुल्कशालाया आगतः शौल्कशा-लिक । गौल्मिक । आपणिक ।

*शुण्डिकादेरण् । ६१ ॥ शुंडिकादिभ्योऽण् स्यात् आगते । शौंडिक । कार्कण । वैर्ध ॥

गोत्रादकवत् ॥ ६२ ॥ गोत्रादंकं इव स्यविधिर्भवति तत आगतेऽर्थे । यथा—विदानां अकः वैद । तथा विदेभ्य आगत वैद । गार्ग । औपगवक ।

* नृहेतोर्वा रूप्य ॥ ६३ ॥ नृवाचिभ्यो हेतुवाचिभ्यश्च रूप्यो वा भवति आगतेऽर्थे । जिनदत्तादागत जिनदत्तरूप्य । जैनदत्त । समाद्धेतो-रागतं समरूप्यं समीय । पापरूप्यं, पापीयं ।

मयट् ॥ ६४ ॥ नृहेतुभ्यो मयट् स्यात् आगते । जिनदत्तमय । सममयं । पापमयं ।

श्रोत्रियत्वं । श्रोत्रियता ।

ष्यादेरिक ॥ १५० ॥ इगंतात् ष्यादेरण् स्यात् भावादौ । शौचं । शुचित्वं । शुचिता । मौनं । मुनित्वं । मुनिता । पाटवं । पटुता । प टुत्वं । पैत्रं । पितृत्वं । पितृता । ष्यादेरिति किं । पांडुत्वं । इक इति किं ? घटत्वं ।

योऽनेकपात्तमाद् वुञ् ॥ १५१ ॥ योऽ रूपोत्तमाद् वुञ् स्यात् भावादौ । रामणी यकं । रमणीयत्वं । रमणीयता । औपाध्यायकं । उपाध्यायत्वं । आचार्यकं । योऽ इति किं ? वि मानत्वं । रूपोत्तमादिति किं ? क्षत्रियत्वं । कामत्वं ।

द्वन्द्वधूर्तादि ॥१५२॥ द्वंद्वात् धूर्तादिभ्यश्च वु ञ् स्यात् । कुरुकाशीनां भाव कृत्यं वा कौरुका शिका । भारतबाहुबलिका । श्रेपाल्लमुखनिका । धौर्तिका । चौरिका । धूर्तत्वं । धूर्तता । मानाश्रक ।

गोत्रचरणात् श्लाघात्याकारावेतौ॥१५३॥ गोत्राचरणाच्च वुञ् स्यात् श्लाघादर्थेषु भावादौ गार्गिकया श्लाघते अत्याकुरुते वा गार्गिकामवग वान् । गार्ग्यत्वेन । गार्ग्यतया । वात्सिकया श्लाघते अत्याकुरुते वा वात्सिकामवेतवान् । एवं काठिकया कालापिकया ।

होत्रादिभ्यश्छः ॥ १५४ ॥ एभ्य ऋत्विग्भ्यश्छो भवति भावादौ । अच्छावा कीयामच्छावाकत्वं मच्छावाकता मैत्रावरुणीयं ।

ब्रह्मणस्त्वः ॥ १५५ ॥ अस्मात् ऋ त्विग्वाचिनस्त्वो भवति भावादौ । ब्रह्मणो भाव कृत्यं वा ब्रह्मत्वं ।

+धान्याच्छाकटशाकिनौ क्षेत्रे ॥ १५६ ॥ तद्वाद् क्षेत्रेऽर्थे शाकटशाकिनौ स्तौ टा । इक्षूणां क्षेत्रं इक्षुशाकटं इक्षुशाकिनं । मूलशाकटं मूलशाकिनं ।

धान्येभ्य खञ् ॥ १५७ ॥ धान्यवाचि भ्यः खञ् स्यात् । मुद्गानां क्षेत्रं मौद्गीनं । कौ द्रवीणं । मैयगवीनं ।

व्रीहिशाल्यो ढञ् ॥ १५८ ॥ आभ्यां क्षे त्रे ढञ् स्यात् । व्रैहेयं । शालेयं ।

+ यवयवकषष्टिकात् य ॥ १५९ ॥ एभ्यो यो भवति क्षेत्र । यवानां क्षेत्रं यव्यं । यवक्यं । षष्टिक्यं ।

*माषोमाषात् ॥१६०॥ आभ्यां यो भवति वा क्षेत्रे । अणव्यं । आणवीनं । माष्यं । माषीणं ।

*तिलोमाभंगात् ॥ १६१ ॥ एभ्यस्तिलेभ्यो यो वा स्यात् क्षेत्रे । तिल्यं । तैलीनं । उम्यं । औमीनं । भंग्यं । भांगीनं ।

कटोऽलाब्वाश्च रजसि ॥ १६२ ॥ अला व्वास्मात् तिलादेश्च कटस्तो भवति रजसर्थे । अलाबूनां रज -अलाबूकटं । तिलकटं । उमा कटं । भंगाकटं ।

गम्येऽद्याधात् खञ् ॥ १६३ ॥ अधात् खञ् स्यात् अद्य गम्येऽर्थे । अध्वसैकनाद्य गम्य -आध्वीनोऽध्वा ।

सर्वचर्मण कृत खश्च ॥ १६४ ॥ स र्वचर्मणस्तावात खो भवति खञ् च कृत इत्यस्मि न्नर्थे । सर्वचर्मण कृत सर्वचर्मीणः सार्वचर्मीणः ।

यथामुखसंमुखाद्दर्शन ॥ १६५ ॥ आभ्यां तांताभ्यां दर्शनमित्यस्मिन्नर्थे खो भवति । यथा मुखं दर्शन -यथामुखीनः संमुखस्य दर्शनः संमुखीनः।

सर्वादे पथ्यंगकर्मपत्रपात्रशरावाद् व्याप्नोति ॥ १६६ ॥ सर्वपूर्वात् पथ्यादेः व्याप्नोति इत्य स्मिन्नर्थे खो भवति । सर्वपथान व्याप्नोति सर्वप थीनो रथः । सर्वांगीणस्तापः । सर्वकर्मीणः पु रुषः । सर्वपत्रीणः सारथिः । सर्वपात्रीणः ओ दनः । सर्वशरावीणः सक्तु ।

आप्रपदं ॥ १६७ ॥ अस्मात्तांतात् खो भवति । आप्रपदं व्याप्नोति आप्रपदीनः पटः ।

*मात्वादगद्वमादे ॥ १३७ ॥ यदित उ-पधमनुक्रमिष्याम आन्नासपरस्वन्नभ्यात् स सर्वो भाविकृत्वी जयो गडुनादीन् वत्रमित्वा । उपरत्रै वाञ्चाहरिष्याम । भगडुकादेरिति किं ? गाडु स्वं । दायार्थ । कार्मकल्यं ।

*नम पादवुपादे ॥ १३८ ॥ भात्वात् मह पूवात् पमात् पुषार्थत्वाविवाद् स्वतओ स्त्र । न शुक्लोऽशुक्ल । सम्य भावः अशुक्लत्वं । अशुक्लता । अराजत्वं । अराजता । अम्बविरत्वं अम्बविरता । अहामनत्व । अहायनता । अ पुषादारिति किं ? न पुषाऽपुषस्तस्य भाव कर्म वा भापुष्यं । भावतुर्व । भासंगत्वं । भालब-प्य । भारस्य । भालस्यं ।

+ पृथ्वादेर्वमत् ॥ १३९ ॥ पृथ्वादिभ्य इमन् वा स्यात् तौ च । पृथ्वार्थीव मथिमा । पृथुत्वं । पृथुता । पार्थिव । म्रदिमा । मृदुर्त्व । मृदुता । मादव । कशिमा । कशुत्वं । कशुता । कार्शयं ।

वर्णदृढादिभ्यष्यण् च ॥ १४० ॥ व र्णवाचिभ्यो दृढादिभ्यश्च ष्यण् स्यात् इमन् च वा । शुक्लस्य भावः शौक्ल्यं । शुक्लिमा । शुक्लता । शुक्लत्व । कार्ष्ण्य । कृष्णिमा । कृ-ष्णत्वं । कृष्णता । दार्ढ्य । द्रढिमा । दृढत्वं । दृढता । बाढ्य । ब्रढिमा । बृढत्वं । बृढता । परिवृढ्यं । परिवृढिमा । परिवृढत्वं । परिवृढता ।

*राजपत्यन्तगुणोक्तिरराजादिभ्यःकृत्ये च॥१४१॥ राजदिभ्य पत्यन्तम्यो गुणोक्तिभ्या राजादिभ्यश्च कृत्ये कर्मणि भावे च ष्यण् स्यात् । सुराजो भाव कर्म वा सौराज्यं । सुराजत्वं । सुराजता । यौव राज्यं । युवराजत्वं । युवराजता । नारपत्यं । नरपतित्वं । नरपतिता । आधिपत्यं । अधिपति त्वं । अधिपतिता । सैनापत्यं । जाड्यं । जड ता । मौढ्य । मूढत्वं । मूढता । कौशल्यं ।

राज्य । राजत्व । राजता । काव्य । कवित्व । कविता । ब्राह्मण्य । ब्राह्मणत्वं ब्राह्मणता ।

*सहायाद्वा ॥ १४२ ॥ सहायात् ष्यण् वा स्यात् भावादौ । साहाय्यं । सहायत्वं । सहाय ता । साहायक ।

*स्तेयार्हस्यं ॥ १४३ ॥ एतद् द्वयं निपात्यं । स्तेनस्य भावः कृत्यं वा स्तेयं । या नलं च । स्तेनत्वं । स्तेनता । अर्हतो भाव कृत्यं वा आ र्हन्त्यं । अर्हतो नुमन्तौ च । अर्हत्वं । अर्हता ।

*सखिवणिग्दूताद् यः ॥ १४४ ॥ सख्या देर्यो भवति भावादौ । सख्युर्भाव कर्म वा सख्यं । सखित्वं । सखिता । वाणिज्यं । वणिक्त्वं । वणि क्ता । दूत्यं । दूतत्वं । दूतता ।

कपिज्ञातेर्ढक् ॥ १४५ ॥ आभ्यां ढक् स्यात् भावादौ । कापेयं । कपित्वं । कपिता । ज्ञातेयं । ज्ञातित्वं । ज्ञातिता ।

वयःप्राणिजातेरञ् ॥ १४६ ॥ वयोवाचि भ्य प्राणिवाचिभ्याम् स्यात् भावादौ । कौमारं । कुमारत्वं । कुमारता । कैशोरं । काक्म । वार्करं । प्राणिजाते—आश्वं । अश्वत्वं । अश्वता । गा-र्दभं । औष्ट्रं । हास्तं ।

हायनान्तयुवादेरण् ॥ १४७ ॥ हायनान्तात् युवादेश्चाण् स्यात् भावादौ । द्वैहायनं । द्विहा यनत्वं । द्विहायनता । त्रैहायनं । यौवनं । युवत्वं । युवता । स्थाविरं । कौतुकं । कौतुकं । कौतूहलं ।

*हृदयपुरुषादसे ॥ १४८ ॥ आभ्यां भावे कृत्ये चाण् स्यात् असे । हार्दं । हृदयता । पौ रुषं । पुरुषत्वं । पुरुषता । असे इति किं ? सु हृदयत्वं । परमपुरुषत्वं ।

*श्रौत्रं ॥ १४९ ॥ श्रोत्रियशब्दादण् निपा-त्यते नलं च । श्रोत्रियस्य भाव कृत्यं वा श्रौत्रं

+ कुट्यरश्चाभवात् ॥ १८९ ॥ भवात् कुटारो भवति कटस्य स्वार्थे।अवगत -अवकुटार ,अवकट ।

नासिकानते टीटनाटभ्रगाः ॥ १९० ॥ अवात् नासिकाया टीटादय स्युः नतेऽर्थे । अवनता नासिका यस्य-अवटीटः । अवनाट । अवभ्रटः ।

+ नर्बिडबिरीसौ ॥ १९१ ॥ नेर्नासिकानतविषय एतौ स्यौ स्त । निनतं नासिकायाः निबिडं । निबिरीस ।

+ केनौ चिक् ॥ १९२ ॥ नेर्नासिकानतेऽर्थे कमौ स्तः नेश्चिक् चादेश । निनत नासिकाया-चिकं चिकिनं ।

× पिटे चिः ॥ १९३ ॥ नेर्नासिकानत विषये पिटो भवति नेश्चिरादेश । चिपिटं ।

क्षुरस्थकास्तौ वा क्षुद्र ॥ १९४ ॥ क्षुस्तक शब्दात् स्वार्थे को वा स्यात् तत्संनियोगे क्षुद्रशब्दस्य च क्षुल्लरादेश । क्षुल्लक । क्षुल्ल ।

क्लिन्नाल्लश्चिष चिल पिल्ल च ॥ १९५॥ क्लिन्नात्लो भवति अक्षिण वाच्ये चिल् पिल् चुलादेशश्च । क्लिन्ने चक्षु-चिल्लं, पिल्लं चुल्लं ।

+ उपत्यकाधित्यके ॥ १९६ ॥ उपाधिभ्यां त्यको निपात्य आसन्ने अधिरूढे च स्त्रियां इत्यामावश्च । पर्वतमुपासन्नो देशः उपत्यका । पर्वतमध्यारूढः अधित्यका ।

× तदस्य सजातं तारकादिभ्य इतः ॥ १९७ ॥ तदिति वासमर्थेभ्य सजातमिति शिष्टेभ्य तारकादिभ्य अस्येति षार्थे इतस्त्यो भवति । तारकाः संजाता अस्य तारकितं नभः। अभितमाकाशं । पुष्पिता वल्ली । फलितस्तरुः । कुसुमित । निद्रित ।

गर्भादप्राणिनि ॥ १९८ ॥ गर्भशब्दादितो भवति अप्राणिनि । गर्भोऽस्य संजात-गर्भितो व्रीहि । अप्राणिनीति किं ' गर्भिणी गौ ।

प्रमाणे मात्रट् ॥ १९९ ॥ प्रमाणार्थे मात्रट् स्यात् । ऊरु प्रमाणमस्य ऊरुमात्रं जलं । जानुमात्री खाता । धनुमात्री भूमि ।

हस्तिपुरुषाद्वाऽण् ॥ २०० ॥ आभ्यामण् वा स्यात् । हस्ती प्रमाणमस्य हास्तिनमंबु । हस्तिमात्रं हस्तिद्वयस, हस्तिदघ्नं । पौरुष । पुरुषद्वयसं । पुरुषदघ्नी खना ।

वोर्ध्वे द्वयसट् दघ्नट् ॥ २०१ ॥ ऊर्ध्वे प्रमाणे द्वयसट् दघ्नटौ त्यौ वा स्तः । ऊरु प्रमाणमस्य ऊरुद्वयस । ऊरुदघ्न । ऊरुमात्रं तोयं । ऊरुद्वयसी परिखा । दघ्नी । ऊर्ध्वे इति किं ? रज्जुमात्री भूमिः ।

मन्याने ॥ २०२ ॥ मानवाचिभ्योऽप प्रमाणे मात्रडादेर्लुप् भवति । शम' प्रमाणमस्य शम । दिष्टि । वितस्ति । मान इति किं ? ऊरुमात्र।

राट् संशये च ॥ २ ३ ॥ संशय च राट् मात्रडादेर्लुप् भवति। द्वौ प्रस्थौ मानमस्य द्विप्रस्थः। द्विशतः । द्वौ समौ मानमस्य द्विसमः। द्विवितस्ति ।

मात्रट् ॥ २०४ ॥ मान संशये मात्रट् स्यात् । कर्षो मानमस्य कर्षमात्रं घृत । प्रस्थमात्रं धान्यं । हस्तमात्रं क्षेत्रं । पञ्चमात्रा पुरुषा ।

शप्रुश्नन्विशते ॥ २०५ ॥ शत्यन्तात् श अंतात् विशतेश्च मात्रट् स्यात् । त्रिंशन्मानमेषां स्यात् त्रिंशन्मात्रा' । दशमात्रा । विंशतिमात्रा'।

डिन ॥ २०६ ॥ त्रिंशदादिभ्यो डिन् स्यात्। त्रिंशदहोरात्रा मानमस्य त्रिंशी । त्रिंशिनो । त्रिंशिना मासा । पंचदशी अर्द्धमासः । विंशिनो मवनेत्राः ।

यत्तदेतदःकिम ॥ २०७ ॥ आभ्यां यतु स्यात । इदं मानमस्य इयान् । कियान् ।

एतदश्च ॥ २०८ ॥ एतदः मतापस्य

परावरपरंपरपुत्रपौत्रमनुभवति ॥ १६८ ॥ परावरादिविंशतात् खो भवति अनुभवत्यनुभवत्य र्थे । परांश्चावरांश्चानुभवति परोवरीणः । परांश्च परतरांश्च परंपरीणः ।पुत्रांश्च पौत्रांश्च पुत्रपौत्रीणः।

*यथाकामानुकामात्यन्तपारावारपारावारा वारपारान् गामी ॥ १६९ ॥ यथाकामादेरि गतात् गामीत्यस्मिन्नर्थे खो भवति । यथाकामं गामी यथाकामीनः । अनुकामीनः । अत्यंतीनः । पारीणः ।अवारीणः ।पारावारीणः। अवारपारीणः।

अनुगवसं ॥ १७० ॥ अनुगुसन्दाद् अलं गामीत्यस्मिन्नर्थे खो भवति । अनुगवलं गामी अनुगवीनो गोपालः ।

छोऽम्यामित्रं ॥१७१॥ अभ्यमित्रादियता र्थे भवति । अभ्यमित्रमलंगामी-अभ्यमित्रीयः ।

*य ॥ १७२ ॥ अस्माद् यो भवति अलं-गामिनि । अभ्यमित्र्यः ।

*खश्चाध्वान च ॥ १७३ ॥ अध्वनोऽभ्य मित्राश्चालंतात् खो भवति यश्च । अध्वानमलं-गामी अध्वनीनः । अध्वन्यः । अभ्यमित्रीणः ।

समां समां विजायते ॥ १७४ ॥ समां समां शब्दात् खो भवति विजायतेऽर्थेऽस्मां समां विजायते गर्भमादधाति समांसमीना गौ ।

अद्यश्वीनावष्टब्धेऽप्यासन्ने ॥ १७५ ॥ एतद्द्वयं साधु निपात्यं आसन्नमित्यस्मिन्नर्थे । अद्यश्वो वा विजनिष्यते अद्यश्वीना गौ । अद्य प्रातीना । आसन्नप्रसवा इत्यर्थः ।

* सर्वान्नानुपदीनायानयीनमदादा नेयं ॥ १७६ ॥ सर्वान्नीनादयः साधवो निपा त्यंते भक्षणाद्यर्थेषु । सर्वान्नमत्ति सर्वान्नीनो भिक्षुः । पदस्यपदं अनुपदं बद्धा अनुपदीना उपानत् । अयानयं नेयः—अयानयीनः सारः ।

* आगवीनं ॥१७७॥ आगो भवितृकाम

कर्मकारिणि खो निपात्यः प्रतिदानस्य च । आगो प्रतिदानं कर्म करोति आगवीनः कर्मकरः ।

* साप्तपदीनं सख्यं ॥ १७८ ॥ सप्तपदात् खम निपात्यं सख्यमित्यस्मिन्नर्थे । सप्तभि पदै रवाप्यं साप्तपदीनं सख्यम् ।

गोष्ठीनं भूतपूर्वे ॥ १७९ ॥ गोष्ठात् खन निपात्यत भूतपूर्वेऽर्थे । गोष्ठा भूतपूर्व गौष्ठीनो देशः ।

चरट् ॥ १८० ॥ भूतपूर्वे चरट् स्यात् । आढ्यो भूतपूर्वः-आढ्यचर ।अभिचर ।दर्शनीयचरः।

वाया रूप्यश्च ॥ १८१ ॥ तांतात् रूप्यो भवति चरट् च । देवदत्तस्य भूतपूर्वो गां देव-दत्तरूप्य' । देवदत्तचरः । देवदत्तचरी ।

*पील्वादे कुण' पाक ॥१८२॥ पील्वा दिभ्य' पाकेऽर्थे कुणो भवति । पील्वां पाक' पीलुकुण कर्कंधुकुण । कर्कीकुणः ।

*कर्णादिपक्षान्मूले जाहति ॥१८३ ॥ कर्णादेः पक्षाच मूलेऽर्थे जाहती स्यौ स्वः।कर्णस्य मूल कर्णजाहं । मुखजाहं । अक्षिजाह । पक्षस्य मूलं पक्षति ।

+तृणोष्णशीतादालुरसहे ॥१८४॥ तृणा देराल स्यात् असहेऽर्थे । तृणस्यासह तृणालु । उष्णालु' । शीतालुः ।

+ हिमादेलुः सहे ॥१८५॥ हिमात् सहेऽर्थे एलुः स्यात् । हिमस्य सह हिमेलु ।

+वातबलादूलः ॥ १८६ ॥ आभ्यां ऊलो भवति । वातस्य सह वातूल ।बलस्य सह बलूलः।

वे शालशंकटौ ॥ १८७ ॥ विशब्दात् एतौ स्यौ स्वः स्वार्थे । विशाला -विशालः विशंकटः

*अ्युत्सान्निमात् कट ॥१८८॥ एभ्य कटो भवति।विसाहः—विकटो देशः।उद्गत-उत्कटो गंध । संगतः संकट पंथाः । निगतो निकटो ग्रामः। प्रगत -प्रकटोऽर्थः ।

षष्ठी । कतिथ' । कतिपयथः ।

चतुरः ॥ ६ ॥ अस्य थुग स्यात् डटि परं। चतुर्णो पूरण चतुर्थं । चतसृणां पूरणी चतुर्थी।

छयौ चस्र च ॥ ७ ॥ तस्माच्छयौ स्तौ स्त चकारस्य च स्त । तुरीयः । तुरीया । तुर्य' ।

द्वेस्तीय ॥ ८ ॥ द्विशब्दस्तीयो भवति । द्वयोः पूरण द्वितीयः । द्वितीया ।

त्रेस्तृ च ॥९॥ त्रेस्तीयो भवति तृ इत्ययम चादेश । त्रयाणां पूरणः तृतीयः । तृतीया ।

+शतादिमासार्धमाससंवत्सराडमट् ॥१०॥ शतादिभ्यो मासादेश्च डमट् स्यात् । शतस्य पूरणः शततमः । सहस्रतम' । अयुततम' । मासतमो दिवसः । अर्द्धमासतम । संवत्सरतम ।

तेरस्य्यादे ॥ ११ ॥ तिरन्तात् अस्यादिसंख्यापूर्वात् तमट् स्यात् । षष्टेः पूरणं षष्टितम । षष्टितमी । सप्ततितम । अशीतितमः । नवतितमी। अस्यादेरिति किं ? एकषष्टः ।

× विंशत्यादेर्वा ॥ १२ ॥ विंशत्यादिभ्य तमट् वा स्यात् । विंशते पूरणः विंशतितमः । विंशतितमी । विंश । एकविंशतितम ,एकविंश' । त्रिंशत्तम , त्रिंश । विंशी । त्रिंशी ।

तेन वित्तः चंचुचणौ ॥ १३ ॥ तेनेति भासमर्थात् वित्त इत्यस्मिन्नर्थे चंचुचणौ स्तौ स्त'। तर्केण वित्तःतर्कचंचुः । तर्कचण'।व्याकरणचंचु'। व्याकरणचण' । केशचंचु । केशचण ।

डटो ग्रथं ग्रहन् क उप च ॥ १४ ॥ भासात् डडन्तात् ग्रंथं ग्रहणात्यर्थे को भवति, डलुग् च नित्यं । द्वितीयेन रूपेण गृह्णाति द्विक । त्रिकः । चतुष्क ।

ग्रहणे वा ॥१५॥ डडन्तात् को भवति ग्रंथ ग्रहणेऽर्थे डलुग् च वा । द्वितीयं ग्रहणंद्विकं,द्वितीयकं । त्रिकं, तृतीयकं व्याकरणस्य ।

सस्याद् गुणात् परिजाते ॥ १६ ॥ सस्यशब्दात् गुणवाचिन परिजातेऽर्थे सप्तगुण संपन्ने को भवति । सस्येन परिजात सस्यक' शालि' वत्सः वत्सा वा ।

पार्श्वकायःशूलिकदंडाजिनिकानुपयन्वेष्टा— ॥ १७ ॥ पार्श्वकादयो निपात्यते अन्वेष्टरि । पार्श्वेनान्वेष्टा पार्श्वकः-को निपात्य । अय शूलेन-आयःशूलिक । दंडाजिनेन-दांडाजिनिक । ठञ् । अनुपदमन्वेष्टा अनुपदी गवां । इनात्र ।

स्वांगेषु सक्त ॥ १८ ॥ स्वांगेभ्यः ईब तेभ्यः सक्त इत्यस्मिन्नर्थे को भवति । केशेषु सक्त केशक । दंतकः । मस्तकः ।

औदरिकआद्यूनः ॥ १९ ॥ उदराड्ठण् निपात्यत आद्यूनाऽभ्यर्थे । उदरे सक्त औदरिक । उदरकोऽन्यः ।

कर्मठा घटते ॥ २० ॥ कर्मन्शब्दात् ठस्वो निपात्यः इकाभावश्च घटतेऽर्थे । कर्मणि घटते कर्मठो ना ।

अंशं हारी ॥ २१ ॥ अंशादिनंतात् को भवति हारिणि । अंश हारी-अंशक दायाद ।

शीतकोष्णकौ कारिणि ॥ २२ ॥ शीतो ष्णाभ्यां कारिण्यर्थे को निपात्यः । शीतं कारी शीतको जड' । उष्णकारी-उष्णक क्षिप्रः ।

तंत्रादचिरोद्धृते ॥२३॥ तंत्रात् कांतात् भवो द्धृत अचिरापहृतेऽर्थे क भवति । तंत्रादचिरो द्धृतस्तंत्रक' पट ।

कमितर्यन्वभ्यमेः ॥ २४ ॥ एभ्य को भवति कमितरि कामयमानेऽर्थे । अनुकमिता अनुक' । अभीक । अभिकः ।

+ तदस्मिन्नन्नं प्राये स्तौ ॥ २५ ॥ तदिति वासमर्थात् अस्मिन्निर्त्यर्थे को भवति स्तौ यदंत तदन्न प्रायविषय स्यात् । त्रिपुट्यः प्राये

को भवति । एतावान् ।

यत्तदः ॥ २०९ ॥ आभ्यां पतोर्डो भवति । यत्परिमाणमस्य यावान् । तावान् ।

किमश्च स्येऽतिश् ॥ २१० ॥ स्थिसंख्यापरिमाने वर्तमानात् किमस्ताभ्यां च डतिर्भवति च डुश्च । का संख्या मानमेषां कतीमे । कियंत इमे । यति । यावंत । तति । तावंतः ।

अवयवे तयट् ॥ २११ ॥ अवयव वर्तमानात् स्ये तयट् स्यात् । चत्वारोऽवयवा अस्य चतुष्टयं धर्मतत्त्वम्य । पंचतया यमः । सप्ततयी नयवृत्तिः । दशतयो धर्म ।

द्वित्रेः अय वा ॥ २१२ ॥ द्वित्रिभ्यां परस्य तयट् आदेस्तकारस्य वा अ स्यात् । द्वौ अवयवौ अस्य द्वयं । द्वितयं । त्रयं । त्रितयं । मोक्षमार्ग ।

आदेर्गुणात् मूल्यक्रये मयट् ॥ २१३ ॥ आदेर्गुणवाचकात् भागवाचकात् स्थिसंख्यात् मयट् स्यात् आदिश्चेत मूल्ये क्रय वा वर्तते । यवानां द्वौ गुणौ मूल्यमस्योदश्वितः क्रेयस्य द्विमयं उदश्वित् । त्रिमयं । उदश्वितो द्वौ गुणौ क्रेयमेषां द्विमया त्रिमया यवा । गुणादेरिति किं । यवानामेको गुणः मूल्यमस्य एकगुण मुदश्वित् ।

अस्मिन्नाधिक्ये शतसहस्रे तत्संख्य डति अत्रशीतर्डः ॥ २१४ ॥ पांताद् शत्यांतवर्जात् स्थेरस्मिन्निति विषये शतसहस्र च डो भवति अधिकं चेत् तत्संख्यं आधिक स्यात् । विंशतिरधिका अस्मिन् शते विंशं योजनशतं । विंशं सहस्रं । त्रिंश शतं । चत्वारिंश सहस्रं । एकादशं । द्वादशं शतं सहस्रं वा । अधिकमिति किं ? विंशति- रूनमस्मिन् शते । शतसहस्रे इति किं ? एकाद शाधिका अस्यां त्रिंशति । तत्संख्यमिति किं ? विंशतिर्दंडा अधिका अस्मिन् योजनशत । त्रिंशत् माषा अधिका अस्मिन् कार्षापणसहस्र ।

इति शब्दार्णवापरनाम्नि जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां वृत्तौ तृतीयोऽध्याय ।

---

# चतुर्थोऽध्याय ।

## प्रथमः पाद ।

तस्य स्थिपूरणे डट् ॥ १ ॥ तस्येति ता समर्थात् स्थिसंख्यावाचिन डट् भवति स्थिपूरणेऽर्थे । त्रयोदशानां पूरण त्रयोदशो विमलनाथः । चतुर्दशः । पंचदश । षोडश । एकादशानां पूरणी एकादशी । द्वादशी ।

+ नोऽस्ते मट् ॥२॥ नकारांतान्मट् स्यात् असे । पंचानां पूरण पंचमः । पंचमी । सप्तम । सप्तमी । अष्टम । नवम । दशमः । अस इति किं ? एकादश । द्वादश ।

बहुपूगगणसंघस्य तिथुक् ॥ ३ ॥ एषां डटि तिथुक् स्यात् । बहूनां पूरण बहुतिथः । बहुतिथी । पूगतिथ । गणतिथ । संघतिथ ।

यतादिथुक् ॥४॥ यतेरन्त डटि परतस्थुगागमो भवति । इयतां पूरण इयतिथ । कतिथः । यावतिथ । यावतिथी । तावतिथः । तावतिथी ।

षट्कतिकतिपयस्य थुक् ॥ ५ ॥ एषां डटि परे थुक् स्यात् । षण्णां पूरण षष्ठः ।

षष्ठी। कतिथ । कतिपयथः।

चतुरः ॥ ६ ॥ अस्य थुग् स्यात् डटि परे। चतुर्णां पूरणं चतुर्थं । चतसृणां पूरणी चतुर्थी।

छयौ चस च ॥ ७ ॥ तस्माच्छयौ स्यौ स्त चकारस्य च सः। तुरीयः। तुरीया। तुर्यं ।

द्वेस्तीय ॥ ८ ॥ द्विशब्दात्तीयो भवति । द्वयोः पूरणं द्वितीयः। द्वितीया।

त्रेस्तृ च ॥९॥ त्रेस्तीयो भवति तृ इत्ययं चादेश । त्रयाणां पूरणः तृतीयः। तृतीया।

+शतादिमासार्द्धमाससंवत्सराच्चतमट्॥१०॥ शतादिभ्यो मासादेश्च तमट् स्यात्। शतस्य पूरणः शततमः। सहस्रतमं । अयुततमं । मासतमो दिवसः। अर्द्धमासतमं । संवत्सरतमं ।

तेरस्यादे ॥ ११ ॥ तिरन्ताद् असत्यादि-सङ्ख्यापूर्वात् तमट् स्यात्। षष्टेः पूरणं षष्टितमं । षष्टितमी। सप्ततितमं । अशीतितमः। नवतितमी। अस्यादेरिति किं? एकषष्टः।

× विंशत्यादेर्वा ॥ १२ ॥ विंशत्यादिभ्यः तमट् वा स्यात्। विंशतेः पूरणः विंशतितमः। विंशतितमी। विंश । एकविंशतितमं, एकविंशं। त्रिंशत्तमं, त्रिंशं । विंशी । त्रिंशी।

तेन वित्तः चञ्चुचणौ ॥ १३ ॥ तेनेति भासमर्थात् वित्त इत्यस्मिन्नर्थे चञ्चुचणौ स्तौ स्तः। तर्केण वित्तः तर्कचञ्चुः। तर्कचणः। व्याकरणचञ्चु । व्याकरणचणः । केशचञ्चु । केशचणः ।

डटो ग्रहणे सुप्तः क टए च ॥ १४ ॥ भां तात् डडन्तात् अर्थं गृह्णात्यर्थे को भवति डुए च नित्यं । द्वितीयेन रूपेण गृह्णाति द्विकः । त्रिकः । चतुष्कः ।

ग्रहणे वा ॥१५॥ डडन्तात् को भवति ग्रहणेऽर्थे डुए च वा। द्वितीयं ग्रहणमस्य द्विकं, द्वितीयकं । त्रिकं तृतीयकं व्याकरणस्य ।

सस्याद् गुणात् परिजाते ॥ १६ ॥ सस्यशब्दात् गुणवाचिनः परिजातेऽर्थे सगुणसमर्थे को भवति। सस्येन परिजातः सस्यकः शालिः देशः वत्सा वा।

पार्श्वकायःशूलिकदाण्डाजिनिकानुपद्यन्वेष्टरि ॥ १७ ॥ पार्श्वकादयो निपात्यन्ते अन्वेष्टरि। पार्श्वेनान्वेष्टा-पार्श्वकः-को निपात्य। अय शूलेन-आयःशूलिकः। दण्डाजिनेन-दाण्डाजिनिकः। ठण्। अनुपदमन्वेष्टा अनुपदी गवां। इनत्र।

स्वाङ्गेषु सक्तः ॥ १८॥ स्वाङ्गेभ्यः ईप् तेभ्यः सक्त इत्यस्मिन्नर्थे को भवति । केशेषु सक्तः केशकः। दन्तकः। नखकः।

औदरिकमाद्यूनः ॥ १९ ॥ उदरात् ठञ् निपात्यत आद्यूनोऽभिधेये। उदरे सक्तः औदरिकः। उदरकोऽन्यः।

कर्मठो घटते ॥ २० ॥ कर्मन्शब्दात् ठञो निपात्यः इकाभावश्च घटतेऽर्थे । कर्मणि घटते कर्मठो ना।

अर्थं हारी ॥२१ ॥ अशादिरिन्तात् को भवति हारिणि । अशं हारी-अशकः दायादः ।

शीतकोष्णकौ कारिणि ॥ २२ ॥ शीतोष्णाभ्यां कारिण्यर्थे कौ निपात्यौ । शीतं कारी शीतको मन्दः। उष्णकारी-उष्णकः क्षिप्रः।

तत्राभिनवोद्भूते ॥२३॥ तत्रात् कान्तात् नवो द्भूत आचिराप्रहृतेऽर्थे को भवति । तत्रादापो द्भूतस्तत्रकः पटः।

कमितर्यनुकाभीकाभिकः ॥ २४॥ एभ्यः को भवति कमितरि कामयमानेऽर्थे। अनुकामिता अनुकः। अभीकः। अभिकः।

+ तदस्मिन्नन्नं प्राये स्वौ ॥ २५ ॥ तदिति भासमर्थात् अस्मिन्निति अर्थे को भवति सं ज्ञायां तच्चेदन्नं प्रायविषयं स्यात्। गुडापूपाः मां

पाकमस्यां तिथौ त्रिपुटिका पौममासी । गुडापूपिका । कुसरिका ।

कौल्मापीवटकिन्यौ ॥२६॥ कुल्मापवटकाभ्यां अणिना निपात्यौ । कुल्मापा मावेणा अमस्यां कौल्मापी तिथिः । वटकिनी पौममासी।

श्रासगकाद्येके ॥ २७॥ एतौ कातौ निपात्यौ स्तो । श्रासया आयुधजीविनोऽस्मिन् श्रासमको देश । उन्मादस्याश । उन्मादमेरयिरो द्रुपता-उन्मिका मवागूः ।

सा'स्याग्रणी ॥ २८ ॥ स इति वासमर्थात् असेति वार्थे को भवति सद्वांत स चेदग्रणीस्यात् देवदत्तोऽग्रणीरस्य देवदत्तक ।जिनदत्तकःसघ

काम्मयोमनाद्द राग ॥ २९ ॥ बांताद् कालवाचिन' प्रयोजनवाचिनश्च रोगेऽर्थे को भवति सतत कालोऽस्य सततको ज्वर' । द्वितीयदिवस कालोऽस्य द्वितीयक । तृतीयक । विषपुष्प प्रयोजनमस्य विषपुष्पको रोग । शीतक । उष्णक ।

शृंगमरा करम ॥ ३० ॥ शृङ्गमात् को निपात्य करमेऽर्थे।शृङ्गलं बंधनमस्य शृङ्गलक करभः।

उन्मनस्युत्सुकौ ॥ ३१ ॥ उदुत्सुकौ उन्मनसर्थे को भवति । उद्गतं मनोऽस्य उत्क । उत्सु गतं मनोऽस्य उत्सुक' ।

क्षेत्रेऽन्यस्मिन् घा नाम्य ॥ ३२ ॥ क्षेत्रान्तर्गतात् अन्यविशिष्टात् घो भवति नाम्न्यर्थे । क्षेत्रेऽन्यस्मिन् नाश्य क्षेत्रियो व्याधिः ।

भाविया वा छदोऽध्येता ॥३३॥ श्रोत्रियो वा निपात्यत छन्दोऽध्येता चत्। छंद प्रमाण च' श्रोत्रमादेश । छंदोऽधीते श्रोत्रिय । छांदसः।

इंद्रियं ॥ ३४ ॥ इंद्रात् घा निपात्यते । इं द्रस्यात्मनो लिंगं, इंद्रेण कर्मणा वा सृष्टं इंद्रियं ।

भार्द सुके ठाऽन्नताप ॥ ३५ ॥ आर्द्र शुष्कमनेनाप इत्यस्मिन्नर्थे ठो भवति ।आर्द्र शुष्कमनेनाप आर्द्रिको विम' ।

+ इन् ॥ ३६ ॥ आर्द्र शुष्कमनेनाप्यर्थे इन् स्यात् । आर्द्री ।

+ पूर्वात् ॥ ३७ ॥ बांताद् पूर्वाद् इन् स्यात् । पूर्वमनेन कृतं भुक्तं पीतं वा पूर्वी ।

साद ॥ ३८ ॥ सादे पूर्वादिन् स्यात् । पूर्वं कृतमनेन कृतपूर्वी कटं । भुक्तपूर्वी ओदनं । पीतपूर्वी तर्क ।

+ इष्टादेः ॥३९ ॥ इष्टादिभ्य इन् स्यात् । इष्टमनेन इष्टी यज्ञे । पूर्ती श्राद्धे । अधीती तर्के। अर्चिती गुरौ । श्रुती पुराणे ।

तदस्यास्त्यस्मिन्निति मतु ॥ ४० ॥ तदिति वासमर्थात् भवतीति विशिष्टात् अस्यास्मिन् इत्येतयोरर्थयोर्मतुर्भवति । गावोऽस्य संति गोमान् । धनवान् । वृक्षा अस्मिन् संति वृक्षवान् । प्रवान्प्रतिकरवो विवक्षा । संग विषयो नियम्यते।

भूमनिंदाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां प्रायो मत्वादयो मता ॥

भूमा माधुर्ये तस्मिन्—गोमान् । निंदायां-ककुदावर्ती । प्रशंसायां—रूपवती कन्या । नित्ययोग—क्षीरिणो वृक्षा । अतिशायने—उदरिणी कन्या । संसर्गे दंडी ।

माण्यंगादातो वा ल ॥ ४१ ॥ प्राण्यंगात् आकारांतान्मत्वर्थे लो भवति वा । चूडाल । चूडावान् । जघाल । जंघावान् । प्राण्यादिति किं ? शिखावान् प्रदीपः ।चिकीर्षावान्।

*ग्रहश्रुप्रमतो ॥४२ ॥ सिध्मादिभ्यः क्षुद्र जन्तुवाचिभ्यश्च मत्वर्थे लो वा स्यात् । मूछाल । मूछावान् । विचर्चिकाल । विचर्चिकावान् । यूकाल ।यूकावान् । मक्षिकाल । मक्षिकावान् ।

सिध्मादे ॥४३ ॥ पश्मा लो वा स्यात् । सिध्मान्यस्य संति सिध्मल । सिध्मवान् । मधु

ल । गडुवान् । मणिलः। मणिवान् ।

+वातदंतबलललाटादूलः ॥ ४४ ॥ एभ्यो ऊलो वा स्यात् । वातूल । वातवान् । दंतूल ॥ दंतवान् । बलूल । बलवान् । ललाटूल । ललाटवान् ।

वाचो ग्मिन् ॥ ४५ ॥ वाच ग्मिन् वा स्यात् । वाग्मी । वाग्वान् ।

*क्षिप्यालाटौ ॥ ४६ ॥ वाचः आल आट इत्येतौ स्तौ स्त क्षिपि कुत्सायां । वाचाल । वाचाट स्यो निस्सारं बहु वक्ति स एवं क्षिप्यते।

+कालापाटामटालस्तेलौ ॥४७॥ एभ्यो तेलौ स्त क्षिपि । कालाल । कालिलः । पाटाल । पाटिलः । अटाल । अटिलः ।

*पिच्छादेः ॥ ४८ ॥ पिच्छादिभ्यो मत्वर्थे वा लेलौ स्तः । पिच्छलः । पिच्छिल । पिच्छवान् । फेनल । फेनिलः । फेनवान् । उरोल । उरसिल । उरस्वान् । प्रज्ञाल । प्रज्ञिलः । प्रज्ञावान् ।

*लोमादेः श ॥४९॥ एभ्य शो भवति वा। लोमान्यस्य संति लोमशः । लोमवान् । रोमश । रोमवान् । हरिशः । हरिमान् ।

*पामादेर्नः ॥ ५० ॥ एभ्यो मत्वर्थे नो वा स्यात् । पामन । पामवान् । वामन । वामवान् । श्लेष्मन । श्लेष्मवान् ।

+दद्रूशाकीपलास्याः मश्च ॥ ५१ ॥ दद्र्वादेर्नो वा स्यात् मश्च मत्वर्थे । दद्रुण । दद्रूमान् । शाकिन । शाकीमान् । पलाशिन । पलाशीमान् ।

+लक्ष्मणविपुणांगना ॥ ५२ ॥ एते शब्दा निपात्यंते । लक्ष्मीरस्यास्तीति लक्ष्मणः । लक्ष्मीवान् । मत्योऽकारश्चात्र निपात्य । विपुंसो विषसा रसमयो वाऽस्य संति विपुणः आविस्यः । नस्यो पुर्ले च । अंगानि कल्याणान्यस्याः संति अंगना । अंगाला । अन्या-अंगवती ।

मज्ञाश्रद्धार्चावृत्तेर्णः ॥ ५३ ॥ प्रज्ञादेर्णो वा स्यात् मत्वर्थे । प्राज्ञ । प्रज्ञावान् । श्राद्ध । श्रद्धावान् । आर्च । अर्चावान् । वार्त । वृत्तिमान् ।

*ज्योत्स्नादिभ्योऽण् ॥ ५४ ॥ एभ्योऽण् स्याद् वा । ज्योत्स्नाऽस्मिन् अस्ति ज्योत्स्न । पक्षः । ज्योत्स्नावान् । तामिस्र । तमिस्रावान् । वैसर्प व्याधि । कौतुपं गृह ।

सिकताशर्करात् ॥ ५५ ॥ आभ्यामण् स्यात् वा । सैकतः। सिकतावान् । शार्कर । शर्करावान् ।

उश्चिलौ च देशे ॥ ५६ ॥ सिकताशर्कराभ्यां मत्वर्थे देशे उश्च इल अण् च वा भवंति । मतोर्लुप् । तेन चातुरूप्यं । सिकता देशः । सिकतिलः । सैकत । सिकतावान् । शर्करा । शर्करिलः, शार्करः । शर्करावान् ।

द्युद्रोर्मः ॥ ५७ ॥ द्युद्रुभ्यां मो वा स्यात् । द्यौर स्यास्तीति द्युमः । द्रुमः ।

+मधुकृष्यादिभ्यो रवलौ ॥ ५८ ॥ मध्वादिभ्य कृष्यादिभ्यश्च मत्वर्थे यथासंख्य र वलौ स्तौ वा स्त । मधुरो रस । ऊषरं क्षेत्र । मुष्कर पशुः । सुषिरं काष्ठ । खं महत्कंठविवरमस्यास्तीति खर । खवानन्य । अन्यत्र-मधुमान् । ऊषवान् । मुष्कवान् । कृषीवलः । कृषिमान् । रजस्वला स्त्री । रजस्वान् ग्राम । परिषद्वल. परिषद्वान् राजा ।

*कांडांडमांडादीरः ॥ ५९ ॥ एभ्य ईरो वा स्यात् । कांडीरः । कांडवान् । आंडीरः । आंडवान् । मांडीरः । मांडवान् ।

कच्छ्वा डुर ॥ ६० ॥ कच्छूशब्दात् डुरो भवति वा । कच्छुर । कच्छूमान् ।

* दंतादुन्नते ॥ ६१ ॥ दंतादुन्नतेऽर्थे डुरो भवति । दंता उन्नता अस्य संति दंतुर । अन्यत्र-दंतवान् ।

* मेधारथादेरः ॥६२॥ आभ्यामिरो वा स्यात् । मेधिरः । मेधावी । मेधावान् । रथिर ।

स्ताम्या च युम् भवति । ऊर्णायुः । अहयु । शुंभयुः । कंयु । शंयु ।

सूक्तसाम्नोश्छः ॥ १०३॥ सूक्ते सामनि चाभिधेये मृदा मत्वर्थे छो भवति । अच्छावाक् शब्दोऽस्मिन्नस्ति अच्छावाकीयं । मैत्रावरुणीयं सूक्तं । यज्ञीयं । वारवन्तीयं साम ।

षोऽध्यायानुवाके ॥ १०४ ॥ अध्यायेऽनुवाके चाभिधेये मृदो मत्वर्थे छो भवति तस्य चोप् वा । गर्दभाण्डशब्दोऽस्मिन्नध्यायेऽनुवाके वा गर्दभाण्डीयः, गर्दभाण्ड—अध्यायोऽनुवाको वा । कूर्मपुत्रीयः । कूर्मपुत्र । उच्छिष्टीयः । उच्छिष्ट ।

विमुक्तादेरण् ॥१०५॥ विमुक्तादिभ्योऽण् स्यात् अध्यायानुवाकयोरभिधेय । विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्त । दैवासुरः । राक्षोसुरः ।

घोषदादेर्वुन् ॥ १०६ ॥ अस्माद् वुन् स्यात् अध्यायादौ । घोषदशब्दोऽस्मिन्नस्ति घोषदक । इत्तक ।

वनहिरण्ये कामे ॥ १०७ ॥ आभ्यां मीत्वताभ्यां कामऽर्थे वुन् स्यात् । वने काम वनकं । हिरण्यकः ।

• किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ १०८ ॥ किम सर्वनामभ्यो द्व्यादिवर्जितेभ्य बहुशब्दा चाधिपुस्यवाचिन "त्रि सुप 'इत्यत प्राक् वक्ष्य माणास्या भवंति इत्येषोऽधिकारो ज्ञेयः । तत्रै वोदाहरिष्यामः । अद्व्यादिग्रहणं किं ? द्वाभ्यां । द्वयोः । त्वत् । मत् । भवतः । भवतोः । युष्मात् ।

इदम इश् ॥ १०९ ॥ इदम इश् भवति तसादौ । अस्मात् । इत । इह ।

एततो वा ॥ ११० ॥ इदम एत इत इत्येतौ आदेशौ स्त रेफादौ थकारादौ च परतः । एतर्हि । इत्थं ।

एतद' ॥ १११ ॥ एतदश्चौ स्त रफ थकारादौ परत । एतस्मिन्नवसरे काले एत र्हि । इत्थं ।

अश् ॥ ११२ ॥ एतदोऽश् भवति तसादौ । एतस्मात् अत । एतस्मिन् अत्र ।

कायास्तस् ॥ ११३॥ किमादेः कांतात् तस् भवति । कस्मात्—कुतः । सर्वतः । विश्वत । बहुभ्यो—बहुतः ।

तसेः ॥ ११४ ॥ परस्य किमादिभ्य आद्यादिभ्यस्तसीत्येवमादिना विहितस्य तसे- स्तस् भवति । कुतः आगतः । ततः आगत ।

• पर्यभेः सर्वोभये ॥ ११५ ॥ पर्यभिभ्यां सर्वोभयेऽर्थे तस् भवति । परित । अभितः

इपस्त्रः ॥ ११६ ॥ ईबंतात् त्रो भवति— सर्वस्मिन्—सर्वत्र । तत्र । यत्र । बहुत्र ।

• किमोऽत्र ॥११७॥ किम अश् भवति त्रम । कस्मिन्—क, कुत्र ।

इदमो ह ॥११८ ॥ इदमः हो भवति । अस्मिन्—इह ।

• भवत्वायुष्मद्दीर्घायुर्देवानांप्रियेकार्थाच्च ॥ ११९ ॥ भवत्वादिसमानाधिकरणात् किमादेः त्रो भवति तस्य । को भवान् । कुत्र भवान् । कुतो भवान् । यो भवान्—यत्रभवान् । यतो भवान् । स भवान् । ततो भवान् । ततो भवंतौ । ततो भवत । तं भवतं-तत्रभवंतं । ततो भवंतं । तौ भवंतौ । तत्रभवंतौ । ततो भवंतौ । तान् भवतः । तत्र भवत । ततो भवत । एवं तत्र-त्र । स आयुष्मान् । तत्र आयुष्मान् । तत आयु ष्मान् । स दीर्घायु । तत्रदीर्घायु । ततोदीर्घायुः स देवानां प्रियः । तत्रदेवानांप्रिय । ततो देवा नांप्रियः।चशब्दादन्यत्रापिमनेन गतः इतो गत ।

•कालेऽन्यपतनार्हि ॥१२ ॥ किमादेरन्यपतने

काले हिल्यो भवति । कस्मिन्ननवतन काले कर्हि । यस्मिन्ननद्यतने काले यर्हि । तर्हि । अनद्यतन इति किं ? कस्मिन् काले कदा ।

*इदम ॥ १२१ ॥ इदमः र्हिर्भवति । अस्मिन् काल एतर्हि ।

*अधुना ॥१२२॥ इदमोऽधुना स्यो भवति। अस्मिन् काले अधुना ।

* दानीं ॥ १२३ ॥ तस्माद्दानीं भवति । अस्मिन् काले इदानीं ।

*तदः ॥ १२४ ॥ तदः दानीं भवति । तस्मिन काल तदानीं ।

* यत्किंतत्सर्वैकान्यादा ॥१२५॥ एभ्यो दास्यो भवति । यस्मिन् काले—यदा । कदा । तदा । सर्वदा । एकदा । अन्यदा ।

*सदासद्यः ॥१२६॥ सदा सद्यस् इत्येतौ शब्दौ निपात्यौ । सर्वशब्दाद्दानिपात्य । सदा चाम । सर्वस्मिन् काले सदा । समानात् सस्त्य । समावस्य । समाने काल अहनि वा -सद्य ।

*पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्योऽद्येद्युस् ॥ १२७ ॥ एभ्य अहनि वर्तमानेभ्यः एद्युस् भवति अस्मिन्नहनि । पूर्वेद्यु । अन्येद्यु । अन्यतरेद्युः । इतरेद्युः । अपरेद्युः । अधरेद्यु । उत्तरेद्यु ।

* द्युश्चोभयात् ॥ १२८ ॥ उभयाद्द्युस् भवति येद्युश्च । उभयस्मिन्नहनि-उभयद्यु ,उभयेद्युः

* परेद्यवि ॥१२९॥ परस्मात् एद्यवि स्यो निपात्यः । परस्मिन्नहनि परेद्यवि ।

* परुत्परार्यैषमोऽब्दे ॥१३०॥ एते निपात्यतेऽब्दे वर्षे गम्यमाने । पूर्वशब्दात्परुत्परादेशश्चापूर्वस्मिन् संवत्सरे परुत्।पूर्वतर शब्दाद्भारिस्य परभावश्च । पूर्वतरे संवत्सरे परारि । इदम समसण् इशादेशश्च । अस्मिन् संवत्सरे-एषम ।

*प्रकारे था ॥ १३१ ॥ सामान्यापेक्षा विशेषाभिधानं प्रकार । किमादिभ्यः प्रकारेऽर्थे था भवति । सर्वेण प्रकारेण-सर्वथा । यथा । तथा ।

* कथमित्थं ॥ १३२ ॥ किमिदमेतद्भ्यः थम् निपात्यते । केन प्रकारेण—कथम् । अनेन एतेन वा प्रकारेण—इत्थं ।

* ते सुपः ॥१३३॥ ते प्रागुक्ता तसादयः सुप्संज्ञका भवति । तथा चैवोदाहृत ।

*दिग्भ्यो पञ्चम्याऽस्तात् दिग्देशकाले ॥ १३४ ॥ दिक्शब्देभ्यो पञ्चम्यन्तेभ्यो दिशि देशे काले च वर्तमानेभ्याऽस्तात् भवति । पूर्वा दिग् रमणीया पूर्वो देशः कालो वा रमणीय' । पुरस्तात् रमणीयं । पूर्वस्या' दिश पूर्वस्माद्देशात् कालाद्वा आगत । पुरस्तादागत । पूर्वस्यां दिशि पूर्वस्मिन् देशे काले वा वसति पुरस्तात् वसति । पयमपस्ताद रमणीयमित्यादि । पञ्चम्य इति किं ? पूर्वं ग्रामं गत । दिग्देशकाल इति किं ? पूर्वस्मिन् गिरौ वसति।

*परावराभ्यां स्तात् ॥१३५॥ आभ्यां पञ्चम्यन्ताभ्यां दिग्देशकालेषु वर्तमानाभ्यां स्तात् भवति । परा दिग् रमणीया । परा देश कालो वा रमणीय —परस्तात् रमणीय । परस्तादागत । परस्तात् वसति । अवरस्तात् रमणीय । अवरस्तादागत । अवरस्तात् वसति ।

*दक्षिणोत्तराभ्यामतस् ॥ १३६ ॥ आभ्यां आभ्यां च पञ्चम्यन्ताभ्यां दिग्देशकालेषु वर्तमानाभ्यां अतस् भवति । दक्षिणतो रमणीयं । दक्षिणत आगत । दक्षिणतो वसति । उत्तरतो रमणीय । उत्तरत आगतः । उत्तरतो वसति । परता रमणीयं । अवरता रमणीयमित्यादि ।

* अधराच्चात् ॥१३७॥ अस्मात् ताभ्यां च आत् भवति दिगादौ । अधरात् रमणीयं ।

अपरास्यागतः । अपराद्द् वसति । दक्षिणाद्द् रम णीयं । उत्तराद्द् रमणीयमित्यादि ।

* पश्चोऽपरस्य दिगादेश्चाति ॥ १३८ ॥ केवलस्यापरशब्दस्य दिग्पूर्वस्य च पश्चादेशो भवति आतिस्ये परे । अपरा दिग् देशः कालो वा रमणीयं पश्चात्, पश्चादागतः । पश्चाद् वसति । दिगादे—दक्षिणाऽपरा दिग् देशः कालो वा रमणीयः दक्षिणपश्चाद् रमणीयं । उत्तरपश्चाद् रमणीयमित्यादि ।

* वार्धे धौ ॥१३९॥ केवलस्यापरशब्दस्य दिग्शब्दस्य पश्चो वा भवति अर्धे धौ परतः । अपरमर्द्ध—पश्चार्द्धं । अपरार्द्धं । दक्षिणापरस्यार्द्धं दक्षिणपश्चार्द्धं । दक्षिणापरार्द्धं ।

* उपर्युपरिष्टात् ॥१४०॥ एतौ निपात्यौ । ऊर्ध्वशब्दाद् रिरिष्टातौ स्यौ उपादेशश्च । ऊर्ध्वा दिग् रमणीया—उपरि रमणीयं । उप रिष्टाद् रमणीयं । उपर्यागतः । उपरिष्टादागतः । उपरि वसति । उपरिष्टाद् वसति ।

* वैनोऽदूरेऽकाया ॥ १४१ ॥ विकृष्टस्वात् अदूरे दिगादौ वर्तमानात् कायवर्जिताद् एनो वा भवति । अस्मात्पूर्वा दिगदूरा रमणीया पूर्वेणास्य रमणीयं । पूर्वेणास्य वसति । एवं— अपरेण, दक्षिणेन, उत्तरेण । अदूर इति किं ? हिमवतो दक्षिणाद् वसति । अकाया इति किं ? दक्षिणादागतः ।

* अंचेरुप् ॥ १४२ ॥ अंचत्यंतात् प्राग् दिग्शब्दात् चार्केमंतात् दिगादौ वर्तमानात् विहितस्यास्तातः एनस्य वा उप् भवति । प्राची दिग् दूराऽदूरा वा रमणीया—प्राग्रमणीयं । प्रागागतः । प्राग् वसति । एवं—प्रत्यक् । अवाक् । उदक् ।

* दक्षिणाद् आऽऽ ॥१४३॥ दक्षिणाद् अ र्जिताद् दिगादौ वर्तमानात् आस्यो वा भवति । दक्षिणा रमणीयं । दक्षिणाद् रमणीयमित्यादि ।

* आऽऽही दूरे ॥ १४४ ॥ दक्षिणाटकांताद् दूरेऽर्थे आऽऽही इत्येतौ स्यौ स्तः दिगादौ । दक्षिणा रमणीयं दक्षिणाहि रमणीयं । दक्षिणा वसति दक्षिणाहि वसति । दूरे इति किं ? दक्षिणतः । दक्षिणाद् ।

* उत्तराद् वा ॥ १४५ ॥ उत्तराटकांताद् आऽऽही वा स्तः । उत्तरा रमणीयं । उत्तराहि रमणीयं । उत्तरा वसति । उत्तराहि वसति । उत्तरतः । उत्तरात् ।

* पूर्वाधरावराणां पुरधवोऽसि ॥ १४६ ॥ पूर्वादीनां पुरादयो भवंत्यसि परतः दिगादौ । पुरो रमणीयं । पुर आगतः । पुरो वसति । अधो रमणीयं । अधः आगतः । अधो वसति । अवो रमणीयं । अव आगतः । अवो वसति ।

* अस्ताति ॥ १४७ ॥ तेषां पूर्वादीनां पुरादयो भवंत्यस्ताति परतः । पुरस्ताद् रमणीयं पुरस्तादागतः । पुरस्ताद् वसति । एवं—अध स्तात् । अवस्तात् ।

* स्येर्विधार्थे धा ॥ १४८ ॥ स्येः संख्याकाद् विधार्थे धा स्यात् । एकेन प्रकारेण-एकधा । द्विधा । त्रिधा । चतुर्धा । बहुधा भुंक्ते ।

* विचाले च ॥ १४९ ॥ विचाले द्रव्यस्य संख्यांतरापादनेऽर्थे स्येर्धा स्यात् । एको राशिर्द्वै क्रियते द्विधा क्रियते । त्रिधा । अनेकमेकं कुरु एकधा कुरु ।

* वैकाद् ध्यमुञ् ॥१५० ॥ एकाद्वा ध्यमुञ् भवति विधार्थे विचाले च । एकेन प्रकारेण—ऐकध्यं । एकधा भुंक्ते । अनेकमेकं करोति—ऐकध्यं, एकधा करोति ।

* द्वित्रेर्धमुञ् ॥ १५१ ॥ आभ्यां धमुञ् स्यात्

वा विभार्थादौ । द्वैधं । त्रैधं । द्विधा । त्रिधा ।

*एधात् ॥ १५२ ॥ ताभ्यां एधात् भवति विधार्थादौ । द्वेधा । त्रेधा ।

*वा घोति धञ् ॥ १५३ ॥ द्वित्रिभ्यां सङ्ख्ये प्रकारवति विचालवति चार्थे धञ् स्याद् द्वौ प्रकारौ द्वौ मार्गौ वा एषां-द्वैधानि । त्रैधानि ।

* याप्ये पाश ॥१५४॥ याप्ये कुत्स्येऽर्थे सुव पाशो भवति । याप्यो वैयाकरणः—वैयाकरणपाशः । तार्किकपाशः ।

*षष्ठाष्टमाभ्यां ॥ १५५ ॥ अष्टमशब्दांशे भागे वर्तमानात् स्वार्थे मस्यो वा भवति । अष्टम एव—अष्टमो भागः । अष्टमः ।

*षष्ठात् ॥ १५६ ॥ षष्ठांशे वर्तमानात् स्वार्थे मा वा भवति । षाष्ठः । षष्ठ ।

*कश्च माने ॥ १५७ ॥ षष्ठान्मानेऽर्थे वर्तमानात् को भवति मश्च वा । षष्ठ एव षष्ठकः । षाष्ठः । षष्ठः ।

* एकादाकिन्चासहाये ॥ १५८ ॥एकश-ब्दात् आकिन् भवत्यसहाये कश्च वा । एक एव एकाकी । एककः । एकः ।

*तिलात् पिंजपजौ निष्फले ॥ १५९ ॥ तिलात् निष्फलेऽर्थे पिंजपजौ स्तौ स्तः । निष्फल-तिलः—तिलपिंजः । तिलपेजः ।

*तमः प्रकृष्टे मिङश्च ॥ १६० ॥ मिङ्ता न्मुदश्च प्रकृष्टेऽर्थे तमो भवति । सर्वे इमे पचति अयमेषां प्रकृष्टं पचति पचतितमां । जल्पतितमां । मृदवः—सर्वे इमे आढ्या अयमेषां प्रकृष्टः आढ्यः आढ्यतमः । सुकुमारतमः ।

*विभज्ये तरः ॥ १६१ ॥ द्वित्वे विभज्ये च पृथक्कर्तव्ये सति प्रकृष्ट तरो भवति । द्वाविमौ पचतः—अयमनयो प्रकृष्ट पचति-पचतितरां । जल्पतितरां । पटुतरः । पाटकतरः । विभज्ये—सां-काश्यकेभ्यः पाटलिपुत्रकाः पचतितरां । पठंतितरां । आढ्यतरा । अभिरूपतराः ।

*तौ च ॥१६२॥ तौ तकारादी स्यौ तमतरौ प्रसञ्ज्ञौ स्त । कुमारितमा । कुमारितरा ।

*गुणाङ्गाद्वेष्ठेयसू ॥ १६३ ॥ गुणाङ्गमप्रधानं यस्य तस्मात्तरमोः तमतरयो इष्ठेयसू वा स्तः । पटिष्ठ । पटुतमः । पटीयान् । पटुतर ।

*प्रशस्यस्य श्र ॥१६४॥प्रशस्यशब्दस्य श्रो भवति तयो॰ परतः । सर्वेषामयं प्रशस्यः—श्रेष्ठः । अयमनयोरत्याढ्य प्रशस्यः—श्रेयान् ।

* ज्यः ॥ १६५ ॥ तस्य ज्यादेशो भवति तयोः परतः । ज्येष्ठः । ज्यायान् ।

*वृद्धस्य ॥ १६६ ॥ वृद्धशब्दस्य ज्यो भवति तया परत । सर्वेषामनयोरस्याढ्यर्थे वृद्ध—ज्येष्ठः । ज्यायान् ।

बाढान्तिकस्य साधनेदं ॥ १६७ ॥ बाढा-न्तिकयोः साध नेदावादेशौ स्त तयोः परतः । सर्वेषामयं बाढं अस्यति—साधिष्ठं । साधीयः । इदमेषामनयोरस्याढ्यान्तिकं—नेदिष्ठं । नेदीयः ।

युवाल्पस्य कन् वा ॥१६८ ॥ युवाल्पयोः कन् वा भवति तयोः परतः । सर्वेषामयं प्रकृष्टो युवा—कनिष्ठः । यविष्ठः । अयमनयोरस्याढ्य प्रकृष्टो युवा—कनीयान् । यवीयान् । अल्पिष्ठः । अल्पीयान् ।

विन्मतोर्लुप् ॥ १६९ ॥ एतयोर्लुब्भवति तयोः परत । सर्वेषां स्रग्विणामयं प्रकृष्टः स्रग्वी—स्रजिष्ठः । अयमनयोरस्याढ्य स्रजीयान् । अयमेषां त्वग्वतां प्रकृष्टःत्वग्वान्—त्वचिष्ठः । त्वचीयान् ।

प्रशस्ते रूप ॥ १७० ॥ मिङन्तान्मृदश्च प्रशस्तेऽर्थे रूपो भवतिप्रशस्तं पचति—पचतिरूपं । वैयाकरणरूपः । पंडितरूपः ।

वायुक ।वायुमः।वायुकः।मातृकः।मातृय । मातृलः ।

* कठुपि वाः ॥ १८५ ॥ बह्वचो नृलोमद् य तस्य चाचित्युपि सति ततः कम् भवति । देव दत्तः, देवः । अनुकम्पितो देव -देवकः। देवका । जिनकः । जिनका ।

* उप चाजिनात् ॥ १८६ ॥ अजिनान्तात् नृलोः कम् भवति योऽचोप् । व्याघ्राजिनोऽनुकं पित —व्याघ्रकः । सिंहकः । वृककः ।

* अपडकाक्पभाकूपदस्यापि ॥ १८७ ॥ यदृचर्जितैकाच्पूर्वपदस्य योऽप् भवति अचि । अनुकम्पितो वाग्दत्तः-वाचिक ।वाचियः। वाचिलः। त्वाचिलः। त्वाचिक । शुचिकः । पाणिपेषः किं ? अनुकंपितःषडंगुलिः-षडिकः । षडियः । षडिलः।

* द्वितीयादचः ॥१८८॥ द्वितीयादचः परस्य शब्दस्योऽभवति अनुकम्पायां विहितेऽचि परतः। अनुकम्पितो जिनदत्तः—जिनिकः । जिनियः । जिनिलः। उपडः। उपकः। उपिक ।उपियः।उपिलः।

*तेनैषः ॥ १८९ ॥ तेन द्वितीयेनाचा सह ततः परस्य शब्दस्योऽप् भवत्यपि द्वितीयात् एष यदि स्यात् । अनुकंपितो कहोडः-कहिकः। कहियः । कहिलः । कपोतरोमा—कपिकः । कपियः । कपिलः । गुरुदत्तः गुरुकोऽन्यत्र ।

अवसमुपरिविशालवरुणार्यमादेस्तृतीयात् ॥ १९० ॥ शेवलादिपूर्वात् नृलात्तृ तीयादचः परस्य शब्दस्योऽभवत्यचि । अनु कंपित शेवलदत्तः—शेवलिकः । शेवलियः । शेवलिल । सुपरिमितः—सुपरिकः । सुपरियः । सुपरिलः। विशालदत्तः विशालिकः। विशालियः। विशालिलः । वरुणदत्तः-वरुणिकः । वरुणियः । वरुणिलः । अर्यमदत्तः-अर्यमिकः । अर्यमियः । अर्यमिलः ।

* कठिनुपात् ॥ १९१ ॥ कठिनुपादचः परस्य शब्दस्योऽभवत्यचि । अनुकम्पितो बृहस्पतिदत्तः-बृहस्पतिकः। बृहस्पतियः। बृहस्पतिलः ।

* माक्पूपदस्य वा ॥१९२॥ पूर्वपदस्य कपि लुप् स्यात् वापि । अनुकम्पितो देवदत्तः-दत्तिकः।दत्तियः।दत्तिलः।देविकः। देवियः । देविलः ।

ह्रस्व ॥ १९३ ॥ ह्रस्वऽर्थे कादयः स्युः । ह्रस्वः पटः-पटकः । वृक्षकः । पुरुषकः ।

* कुटीशुण्डाद्रः ॥१९४॥ आभ्यां रो भवति । ह्रस्वा कुटी-कुटीरः । शुंडीर ।

* शम्या रुश्च ॥१९५॥ शमीशब्दात् रुर्भवति रश्च । ह्रस्वा शमी-शमीरुः । शमीरः ।

* कुतुपः॥१९६॥ कुतूशब्दादुपो निपात्यते। ह्रस्वा कुतूः-कुतुपः ।

कासूगोण्यास्तरट् ॥ १९७ ॥ आभ्यां ह्रस्वे तरट् स्यात् । ह्रस्वा कासूः—कासूतरी । गोणीतरी ।

* वत्सोक्षाश्वर्षभाद्ध्रासे॥१९८॥ एभ्यस्तरट् स्याद्ध्रासे तनुत्वे गम्यमाने । ह्रसितो वत्सः वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः ।

*किंयत्तदन्याद्द्वयोरेकस्मिन्निर्धार्ये डतर ॥१९९॥ किमादेर्द्वयोरेकस्मिन्निर्धार्ये डतरो भवति । को भवतोः कठः पटुः कर्ता वक्ता वा—कतरः । यतरः । ततरः । अन्यतरः । द्वयोरिति किं ? कोऽस्मिन् ग्रामे मुख्यः स आगच्छतु । निर्धार्य इति किं ? कोऽनयोर्ग्रामयोः स्वामी ।

* वैकात् ॥२००॥ एकशब्दात् द्वयोरेकस्मिन्निर्धार्ये डतरो वा स्यात् । एकतरः, एककः ।

* बहूनां प्रश्न डतमश्च ॥२०१॥ बहूनां मध्ये निर्धार्ये वर्तमानेभ्यः किमादिभ्यः डतमो भवति डतरश्च वा प्रश्नविषये । को भवतां कठः कतमः । कतरः । यतमः । यतरः । ततमः । ततरः। अन्यतम । अन्यतरः । बहूनामिति किं ?

संघाः माता । कपोतपाकाःमाता कापोतपाक्य, कपोतपाक्यौ, कपोतपाकाः । व्रैहिमत्य । ण्यङ् कुजम्बाप्य कौञ्जायन्य, कौञ्जायन्यौ कौञ्जा यनाः । माण्नायन्य । भन्त्रियामिति किं? कपोतपाकी स्त्री । कौञ्जायनी ।

* शस्त्रजीविसंघाञ्ञ्यड् वा ॥३॥ शस्त्र जीविनां संघवाचिनः ञ्यड् वा स्यात् । शबरा शस्त्रजीविसंघः । शाबर्य । शबरः । पौलिन्द्य । पुलिन्द ।

वाहीकेष्वविमराजन्येभ्यः ॥ ४ ॥ वाही केषु शस्त्रजीविसंघवाचकात् विमराजन्य वर्जिताद् ञ्यड् भवति । कुण्डीवृसा शस्त्रजीवि संघ-कौण्डीवृस्य । कौण्डीवृस्यौ । कुण्डीवृसा । क्षौद्रक्य । मालव्यः । वाहीकेष्विति किं? शबर' । अविमराजन्येभ्य इति किं? गौपालि । शालङ्कायन' । राजन्य' । कार्कश्यः ।

वृकाट्टेण्यण् ॥ ५ ॥ शस्त्रजीविसंघाद् वृकाद् टेण्यण स्यात् । वार्केण्य । वार्केण्यौ । वृकाः । वार्केणी ।

* पर्श्वादामनियौधेयादेरणछाञ्ञाः॥६॥पर्श्वादेः दामन्यादे यौधेयादेश्चाण् छाञ्ञमञौ । पर्श्वोरपत्यानि पर्शव । पर्शव' शस्त्रजीविसंघ' पार्शवौ । पर्शवः । राक्षस' । आसुर' । दामन्यादेश्छ'–दामनेय शस्त्रजीविसंघ –दाम नीयः । दामनीयौ । दामनय । औलपीय । वैजवापीयः । यौधेयादेरञ्-यौधेयः । शौभ्रेयः ।

गोत्रअभिजिद्विद्भृतोऽण्यो यञ् ॥ ७ ॥ आभ्यामणन्ताभ्यां गोत्रे यञ् भवति स्वार्थे । अभिजितोऽपत्यं–आभिजित । आभिजित एव आभिजित्य । आभिजित्यौ । आभिजिताः । वैदभृत्य ।

शिलावच्छालावन्मूर्णावद्धर्मतोः ॥८॥ शिला वच्छालावत् गोत्र योऽण्य तदन्ताद् यञ् स्यात् स्वार्थे। शिलावतोऽपत्य शैलावत्य । शैलावत्यौ । शैला वता । शालावत्यः।शामीवत्य । और्णावत्य'।भैमत्य ।

ते द्रि ॥९॥ त ञ्यादयः द्विसंज्ञा भवंति तथा चैवादाहृतं ।

* मकारोक्तौ जातीयः ॥१०॥ मकारवचनो जातीयो भवति । पटुः प्रकारः पटुजातीय' । मृदुजातीय' । उष्णजातीय । नानाजातीय ।

* कोऽण्वादेः ॥११॥ अणुप्रभृतिभ्यः को भवतिाणुः प्रकारः-अणुक । स्थूलक । माषक' ।

+ कृष्णयववर्णार्णसुरावदातगोमूत्राधिक व्रीहिशालस्याहिसुराच्छादने ॥१२ ॥ कृष्णा दिभ्य तिलाद्यर्थेषु को भवति । कृष्णप्रकाराः कृष्णकास्तिलाः । यवका व्रीहयः । अर्णका शाल्य । सुरकोऽहि । अवदातिका सुरा । गोमूत्रकमाच्छादनं । अन्यत्र-कृष्णजातीय इत्यादि ।

* क्तान्माद्यादेस्त्वानत्यये ॥ १३ ॥ क्तांताद् प्रावेद्यामत्यय अकारन्त्येऽर्थे को भवति । अन स्तंसं भिन्न भिन्नक । छिन्न–छिन्नक । छिन्नत मर्क । भिन्नतरक । भिन्नदेश्यक ।

न सामि ॥ १४ ॥ सामिवचने प्रयुक्त क्तांताद् प्रादेश को न भवति । सामिकृतं । सामिभुक्तं । सामिछिन्नतमं ।

*ख्योऽलंकर्मालंपुरुषाध्यदशाशितगो ॥१५॥ अलंकर्मादेः खो भवति । अलंकर्मणे-अलंकर्मीणः । अलंपुरुषीण । अह्यस्मामि पदद्याप्त्यस्य–अध्यद शीनः । आशिता गावो यस्मिन् आशितगवीनं वनं । निपातनात् नुम् ।

वाञ्चोऽदिक्स्त्रियां ॥ १६ ॥ अञ्चत्यं तात् खो वा भवत्यदिक्स्त्रियां । प्राङ्, प्राचीन । उदङ्—उदीचीनः । प्रत्यङ—प्रतीचीन । अपाची । प्रतीची दिक् । स्त्रीग्रहणं किम्?

योऽस्मिन् ग्रामे कठः स आगच्छतु ।

एकात् ॥ २०२ ॥ बहूनामेकस्मिन् निर्धार्ये एकात् डतमो वा स्यात् । एकतमो भवतां कठः एककः ।

इवे सुमविकृत्योः कः ॥ २०३ ॥ सौ प्रतिकृतिविषये च इवार्थे वर्तमानान्मृदः को भवति । अश्व इवार्य-अश्वकः । उष्ट्रकः । प्रति कृति —अश्व इवेदं—अश्वकं रूपं । अभिका प्रतिमा । गर्दभकं ।

* टः नृषार्थपण्यप्राणिजे ॥२०४॥ नरि अर्चार्थे पण्ये चित्रकर्मणि चामिधये वर्तमानान्मृद कस्योप्ता भवति । चंचेव यथा मनुष्य । वर्द्धिका । अर्चार्थे—अर्हन् । शिव । पण्ये शाकः । कपिः । चित्रे–दुर्योधनः । भीमसेन ।

* जीवनऽपण्ये ॥ २०५ ॥ जीवनेऽपण्येऽर्थे कस्योप्ता भवति । वासुदेव इवाय–वासुदेवः स्कंदः । विष्णुः । अपण्ये इति किं ? हास्तिकान् विक्रीणीत ।

देवपथादिभ्यः ॥२०६॥ एभ्यः परस्य कस्योप्ता भवति । देवपथ इव देवपथः । उष्ट्रमी वा । चामरज्जुः ।

वस्तादेयम् ॥२०७॥ वस्तेर्डेयम् स्यात् । वस्ति-रिव–वास्तेयी प्रणालिका ।

* शिलायाः ॥२०८॥ शैलाद्यः स्यात् दम् स्यात् । शिलेव शैलेयं दधि ।

* इयः ॥२०९॥ शिलाया डय् स्यात् शिलेयं ।

शाखादयः ॥ २१० ॥ शाखादिभ्यो यो भवति । शाखेव शाख्यः । मुख्यः । जघन्यः ।

द्रुग्रं भव्यं ॥२११॥ द्रुशब्दाद् यो निपात्यते भव्येऽर्थे । द्रु इव भवति द्रव्यं कार्षापणं । भव्य इति किं ? द्रु इवायं स वेतसः ।

कुशाग्राच्छः ॥ २१२ ॥ अस्माच्छो भवति । कुशाग्र इव कुशाग्रीया बुद्धिः स्वामिन ।

सात् यद्विषयात् ॥ २१३ ॥ सात् इवार्थे विषयात् छो भवति । काकस्य तालस्य काकताल-वदिव-काकतालीयं । अंधकवर्तकीयं । अजक-कृपाणीयं ।

शर्करादेरण् ॥ २१४ ॥ शर्करादिभ्योऽण् स्यात् । शर्करेव शार्करी मृत्तिका । कापालिकं । गौपुच्छं ।

कर्कलोहिताट्टीकण् ॥ २१५ ॥ आभ्यां टीकण् स्यात् । कर्क इव कार्कीकः लौहितीकः ।

* ठण् ॥२१६॥ आभ्यां ठण् स्यादिवार्थे । कार्किकः । लौहितिकः ।

* गोण्यादेः ॥२१७॥ एभ्यष्ठण् स्यात् । गोणीव गौणिकं वस्त्रं । आंगुलिकी हरिद्रा ।

* एकशालायाः ॥२१८॥ एकशालाशब्दात् ठो भवति ठण् च । एकशालेव एकशालिकः । ऐकशालिकः ।

इति सम्यग्दर्शनापरनाम्नि जैनेन्द्रव्याकरणे
सम्यग्वर्त्तिकायां लघुवृत्तौ
चतुर्थाध्याये प्रथमःपादः ।

## द्वितीयः पादः

* पूगाञ्ञ्योऽग्रामणीकात् ॥१॥ पूगवाचिनो मृदो ञ्यो भवति अग्रमणीरिति विशिष्टस्यार्थे वर्त्तमानात्  । लोहध्वजः पूगः-लाहध्वज्य । चातक्यौ,लोहध्वजाः । शैब्यः,शैब्यौ । शिबयः । अग्रामणीकादिति किं ? देवदत्तोऽग्रणीरस्य संघस्य देवदत्तकः ।

व्रातच्फञस्त्रियां ॥ २ ॥ व्रातवाचिनः च्फञन्ताच्च ञ्यो भवत्यस्त्रियां स्वार्थे । नानाजातीया अनियतवृत्तयः उत्सेधजीविनः भारोपजीविनः

सम्यक्-समीचीनः । अविकृत्त्रियामिति किं ? उर्वता दिक् स्वभावता नपुंसकलिंगा । तत्र निषेधो मा भूत् । माक् प्राचीन विक्रमणीयं ।

*जातस्खे द्रव्ये ॥ १७॥ द्रव्ये वर्तमानाया जातेस्खो भवति । जातजो जातिरस्य जातीय जातीय । क्षत्रियजातीयः । सुजातीयः । दुर्जातीय । द्रव्य इति किं ? बहुजातिमाम् ।

*स्येनिमृर्षिप्रादामद्रव्ये ॥ १८ ॥ स्मा दिम्य परात् प्रांतात् स्वत् आम् भवति न चेत्स द्रव्ये वर्तते । उच्चैस्तमां भवति । उच्चैस्तरां हसति । पूर्वाह्णेतमां । अपराह्णेतरां भुंक्ते । पच तितमां । जल्पतितमां । किंतमां जल्पति । किंतरां पठति । द्रव्य इति किं ? उच्चैस्तरो वृक्षः ।

*भिनोऽण् ॥ १९ ॥ मांतात् भिनंताच्चाण् भवति । व्यवक्रोशी । व्यवहासी । सांकोटिनं । सांमार्जिनं ।

विसारिणो मत्स्ये ॥ २ ॥ अस्मादण् भवति मत्स्ये । वैसारिणो मत्स्य" ।

*स्येवारे कृत्वस् ॥ २१ ॥ स्विसंज्ञात् वा रेऽर्थे कृत्वस् भवति । पंचवारान् भुक्ते-पंचकृत्वः । षट्कृत्व । शतकृत्व । बहुकृत्वः । स्ये रिति किं ? वारं वारं भुक्ते ।

*चतुरिभिंढ्, सुच ॥ २२ ॥ एभ्य सुच् भवति वारेऽर्थे । चतुरो वारान् भुंक्ते-चतु त्रि द्वि ।

*सकृत् ॥ २३ ॥ एकशब्दात् वारे सुच् सकृदादेशश्च निपात्यते । एक वारं सकृत् भुंक्ते ।

बहोर्वासन्ने ॥ २४ ॥ अदूरे काल क्रिया वानिन्यर्थे वा भवति । बहुवारान् भुंक्ते बहुधा भुंक्ते । आसन्न इति किं ? बहुकृत्वो भुंक्ते मासस्य ।

*मयट् प्रकृते ॥ २५ ॥ मनेय मावान्येन वा कृतं प्रकृतं । प्रकृतेऽर्थे वर्तमानान्नाम्नो मयट् स्यात् । घृतं प्रकृतं घृतमयं । दधिमयं । अन्नमयं ।

*अस्मिन् ॥ २६ ॥ अस्मिन्नित्यर्थे मयट् स्यात् । घृतं प्रकृतमस्मिन् घृतमय भोजनं । पुष्पमयी पूजा ।

समूहवच्च बहुषु तयोः॥२७॥ बहुषु वर्तमाना न्नाम्नः समूह इव सविधिर्भवति मयट् च तयो प्रकृतेऽस्मिन्निति च । अपूपानां समूहः—आपूपिकं । तथापूपाः प्रकृता —आपूपिकं । अपूपमयं । मोदकाः प्रकृता अस्मिन् मौदकिकं पर्व । मोदकमयं । शष्कुली यात्रा-शष्कुलमयी ।

*भेषजादिभ्यष्ष्यण् ॥ २८ ॥ एभ्य ष्यण् स्यात् । भेषजमेव भैषज्यं । आनंत्यं । चातुर्वर्ण्यं । त्रैलोक्यं ।

*होत्रादेवोपमेयच्छस्वइम् ॥ २९ ॥ होत्रादिभ्यश्छादयो भवति । होत्रैव होत्रीयं । देव एव देवता । औपमेयं ।

+नामरूपाड्धेय ॥ ३ ॥ आभ्यां स्वार्थे धेयो वा स्यात् । नामधेयं । रूपं-रूपधेयं ।

+ भागाद् ॥ ३१ ॥ भागाद्ध धेयो भवति । भागः । भागधेयं ।

य" ॥ ३२ ॥ भागाद् यो भवति । भाग्यं ।

क्षेमादिभ्य ॥ ३३ ॥ एभ्यो यो भवति । क्षेम एव क्षेम्यं । मर्त्यं । अपराध्य ।

+नवात् तनत्नाश्च नू च॥ ३४ ॥ नवश ब्दात् त्नादयो भवंति नव इत्यस्य नूभावश्च । नवं । नूत्नं । नूतनं । नवीनं । नव्यं ।

+प्रात् पुरातने ॥३५॥ प्रशब्दात् पुरातनेऽर्थे त्नादयो भवंति । प्रगतं कालेन पुरातनं—प्रत्न । प्रतनं । प्राणं । प्रीणं ।

कोऽण्यादिभ्यः ॥ ३६ ॥ एभ्यः को भवति । अविरेव-अविकः । यावकः । मणिकः ।

+ [illegible] ॥ कुमार

एतत्र ग्रममधिकृतं ज्ञेय । वक्ष्यति—कायाः स्तो काते । स्तोकान्मुक्तः । अविति किं ? निस्तोकः । प्राग्गो अवधिकार । अनुवधिकारश्च माका मकादेशात् ।

कायाः स्तोकादे ॥१४९॥ स्तोकादिभ्यः परस्याः काया अनुप् भवति । स्तोकान्मुक्तः कतिपयान्मुक्तः । अल्पान्मुक्त । अभिकादागतः अभ्यासादागतः । दूरादागत । विप्रकृष्टादागत । कृच्छ्राल्लब्धम । स्तोकादेरिति किं ? दूरात् मम वृकमर्व ।

ब्राह्मणाच्छंसी ॥ १५० ॥ अत्र कानुग् निपात्यः । ब्राह्मणाच्छंसी ।

ट ओजःसहोऽम्भस्तपोऽञ्जस ॥१५१॥ एभ्यो भैक्स्यानुप् भवति । ओजसाकृतं । सहसाकृत । अम्भसाकृत । तपसाप्राप्त । अंजसाकृत ।

+पुंसानुजमनजुषांधौ ॥ १५२ ॥ एतौ कृतटा नुपौ निपात्यौ । पुंसानुजा कन्या । अनुजा अन्य-नांध -अनुषांधः ।

दव्यात्मन ॥ १५३ ॥ दर्शते यौ परे आत्मन टोऽनुम्भवति । आत्मनापचमः । आत्मनाष्टम ।

* मनसआज्ञायिनि ॥१५४॥ मनःशब्दा दात्मनश्चाज्ञायिनि परे टानुम्भवति । मनसाज्ञायी । आत्मनाज्ञायी ।

सौ ॥१५५॥ मनसष्टानुम्भवति सुविषये । मनसागुप्ता । मनसायत्ता ।

* केः परात्मनः ॥ १५६ ॥ परात्मभ्यां ङस्तनुम्भवति सौ । परार्थं पदं परस्मैपदं । पर-स्मैभाषः । आत्मनेपद । आत्मनेभाषः । परा त्मन इति किं ? सखिर्व ।

ईपोऽद्यस ॥ १५७ ॥ अदन्तात् हलन्ताच परस्या ईपोऽनुप् भवति । वनेहरिद्रकाः । कूपेपि शाचकाः । स्वधिसारः । वृषादिमाषकः । अद्रक इति किं ? नदीकुक्कुटिका । खाविति किं ? भक्षशौंडः ।

*कारे मार्षा इति ॥ १५८ ॥ अद्रसभ्यां ईपोऽनुप् भवति हलदौ मार्षा देवे कारविषये । हलेद्विपदिका । समितिमाषक । कार इति किं ? अभ्याहितपशु । माषामिति किं ? पूप शूपः । हलीति किं ? अविकटोरण ।

मध्यांताद् गुरौ ॥ १५९ ॥ मध्यांताभ्यां ईपोऽनुप् भवति गुरौ यौ परतः । मध्येगुरुः । अंतेगुरुः ।

अकामेऽमूर्धमस्तकात् स्वांगात् ॥ १६ ॥ मूर्धमस्तकवर्जितात् स्वांगात् अकामे यौ परत ईपोऽनुप् भवति । कण्ठेकालः । उरसिलोमा । उदरमणिः । शिरसिशिखः । अकाम इति किं ? मुखे कामोऽस्य मुखकामः । अमूर्धमस्तकादिति किं ? मूर्धशिखः । मस्तकशिखः । स्वांगादिति किं ? पाणशौंड ।

*बंधे घाञि वा ॥ १६१॥ अद्वर्णान्तादीपोऽ नुम्भवति वाञावौ घञ्ते परे । हस्तेबंधः । हस्त बधः । चक्रबंधः । चक्रबधः । घञीति किं ? चक्रबद्धः ।

वे कृति बहुलं ॥ १६२॥ अदन्तात् हसे कृदंते यौ बहुलं ईपोऽनुप् भवति । अवाहेभूमिशर्ये मम्मनिकुत । उत्केविशीर्ण । पात्रेसमिताः । क्वचिन्न भवति—मासकारकः । क्वचिद् विभाषा । सरसिरुहं सरोरुहं । क्वचिदन्यदेव—हृदय स्पृ शतीति हृदिस्पृक् । व इति किं ? अन्वनि कार कोऽस्य मन्यकारकः । कृतीति किं ? अक्षपूतः ।

+अपयोनिमतिचरेऽपः ॥ १६३ ॥ अपश ब्दादीपोऽनुप् भवति यादिषु परतः । अप्सव्यः । अप्सुयोनि । अप्सुमतिः । अप्सुचरः ।

+जे ॥ १६४ ॥ अपः ईपोऽनुम्भवति जे

विदिर्म्भिदर्शने यो ज्ञानीते न स्य । आग्निमारुत । आग्निवारुणी । येपीति किं ? अग्नामरुतौ । आविध्विंद इति किं ? आग्नावैष्णवं । आग्नेन्द्रं ।

उपासोपस' ॥ १८३ ॥ उषस उषासा इत्ययमादेशो भवति देवताद्वंद्वे । उषस नक्त च उषासानक्त । उषासानक्ते ।

दिवो द्यावा ॥१८४॥ दिवो द्यावा इत्ययमादेशो भवति देवताद्वंद्वे । द्यौश्च क्षमा च द्यावाक्षमे । द्यावाभूमी ।

दिवस् पृथिव्यां वा ॥१८५॥ दिव दिवस् भवति पृथिव्यां देवताद्वंद्वे वा । दिवस्पृथिव्यौ । द्यावापृथिव्यौ ।

मातरपितरौ ॥ १८६ ॥ मातृपित्रोर्द्वंद्वे द्वयोररादेशो वा निपात्यः । मातरपितरौ । मातापितरौ ।

*स्त्यसुपि सर्वे पुंवत् ॥१८७॥ स्त्रीशब्दः सर्वे पुंवत् भवति असुपि परतः । सर्वासां प्रियः सर्वप्रियः । भक्त्याः पुत्रः-भक्तपुत्रः । एकक्षीर । सर्वकाम्यति । स्त्रीति किं ? विद्यानिवास' । असुपीति किं ? सर्वस्यै । यस्याः । तस्या । सर्वमिति किं सर्वा प्रिया अस्य सर्वप्रियः । सर्वमनोज्ञ । इत्यादिनिषेधविषयेऽपि यथा स्यात् ।

*स्त्र्युक्तपुंस्कादनूङेकार्थेऽदृप्रियादौ स्त्रियां ॥ १८८ ॥ स्त्री उक्तपुंस्कात् परं स्त्रीत्य ऊङ्वर्जितं एकार्थे दर्शतप्रियादिवर्जिते स्त्रियां वर्तमाने यो पुंवत् पुल्लिंगवत् भवति । दर्शनीया भार्या यस्यासौ दर्शनीयभार्य । शोभनभार्य ।चारुवेष । मसृणभार्य । स्त्रीति किं ग्रामणि कुलं दृष्टि रस्य ग्रामणिदृष्टि । उक्तपुंस्कादिति किं खट्वाभार्या रिक । शतकेशीभार्य । अनूङिति किं वामोरूभार्यः एकार्थे इति किं कल्याण्या माता कल्याणीमाता अदृप्रियादाविति किं कल्याणी पञ्चमी भार्या क-
ल्याणीपञ्चमा रात्रय । कल्याणीमनोज्ञ । कल्याणी भक्ती । स्त्रियामिति किं कल्याणीप्रधान ।

तसादौ ॥१८९॥ तसादिषु परत स्त्री पुंवद् भवति । तस्यास्तत । तस्यां-तत्रामया प्रकृत्या यथातथामभव्या ।भाव्यतरा ।आभ्यतमा इत्यादि।

*इति भो जातिश्च ॥१९०॥ स्त्री जातिरन्या च भसंज्ञा इति पुंवद् भवति। गार्गायण्यः अप त्यं-गार्गो वात्स्य ।गार्गिको वात्स्य । एन्यां साधु एत्य । हस्तिनीनां समूह हास्तिकं भ इति किं कठीरूप्यं ॥

×ङेऽग्निः ॥ १९१ ॥ अग्निः पुंवद् भवति ङे परत ।अग्नायी देवताऽस्य आग्नेय । नियमार्थोऽयं योग । ङेऽग्निरेव पुंवत् नान्यः । श्यैनेय । रौहिणेय' ।

*गुणवचनस्य तसि ॥ १९२ ॥ गुणवचन त्वतलौ परतः पुंवद् भवति । पट्व्याः भावः पटुत्वं, पटुता । मृदुत्वं । मृदुता।गुण इति किं । कठीत्व ।

+बह्वल्पार्थे शसि ॥ १९३ ॥ बह्वर्थोऽल्पार्थश्च शसि इति पुंवद् भवति । बह्वीभ्यो देहि बहुशो देहि । अल्पशो देहि ।

+मृगक्षीरादिषु ॥ १९४ ॥ एषु इतिपदषु सत्पूर्वपद तत्स्त्रियामनेकार्थे च यो पुंवत् भवति। मृग्याः क्षीरं मृगक्षीरं । कुक्कुटाण्ड । मृगपदं ।

क्यङ्मानिनौ ॥ १९५ ॥ क्यङि मानिनि च परत स्त्री पुंवत् भवति।एनीवाचरति एतायते। हरितायते । दर्शनीयां मन्यते दर्शनीयमानी । शोभनमानी ।

न कुप्तकोङ् ॥ १९६ ॥ कोङुतश्च यः ककारस्तदन्त स्त्री पुंवत् भवति । पाचिकाभार्यः । पाचिकात । पाचिकायते । पाचिकामानिनी । कारिकीदारिक । मद्रिकात' । कारिकायते । कारिकामानिनी । तदन्तग्रहणं किं ? पक्वभार्या ॥

कम्पोदो भवति । उदधि । उदपेषं पिनष्टि । उदवासः । उदवाहनः ।

*पोन्य सौ ॥ २२५ ॥ उदकस्य प्राक् परस्य यास्य सावुदा भवति । उदमेघः औदमेघिः । उदवाहः । औदवाहिः । क्षीरोदा । क्षीरोदा । कपयाद । काकादा । साविति किं । उदकपयत ।

*वाघे ॥ २२६ ॥ पूर्वपदस्य वोध्य उत्था स्यात् । देवदत्तः । देवः । दत्त । भीमसेनः भीमः । सेन । सत्यभामा । सत्या । भामा ।

*इकोऽमोऽड्यीपुष्यणम्हे ॥ २२७ ॥ इगन्तस्य मो वा स्यात् यो स येविक् कीस्य इतुनाः स्थानी यथादेशा क्षिप न भवति । लक्ष्मीपुत्रः । लक्ष्मिपुत्रः । ग्रामणीपुत्र ग्रामणिपुत्रः । वधूपुत्रः । वधुपुत्रः । खलपूपुत्र । खलपुपुत्र । इक इति किं । खट्वापादः । अड्याद्येरिति किं । गार्गीपुत्रः । भ्रौकुटं, भ्रूकुटं । कौमुदगंधीनदिः । पृथ्वीभृत ।

ड्यापो कचित्सौ ॥ २२८ ॥ डी आप इत्येवमतस्य कचित् मो भवति । रेवतिमित्र महिलाता । शिलवहः । मंजुरथं । कचित्र स्यात । नान्दीमुख । गंगाद्वारं । कचिद्वधर्म । पृथि वीदत्तः, पृथिविदत्तः । गगादत्ती । गंगदेवी । कचिदन्यत्-तीर्थंकरः तीर्थकरः । ड्याप इति किं । श्रीपुरं । साविति किं । नदीस्नातः ।

त्वे ॥ २२९ ॥ ड्यापोस्त्वे कचित् मो भवति । रोहिणित्वं । रोहिणीत्वं । अजत्वं । अजात्वं ।

*मालेषीकेष्टकस्यान्तस्य च मारिभूलचिते ॥ २३ ॥ मालादीनां तदन्तानां च माला दिषु परत मो भवति । मालभारी । मालमा रिणी । उत्पलमालभारिणी । इषीकतूलं । मुंजेषीकतूलं । इष्टकचितं । पक्वेष्टकचितं ।

+भ्रुवः कुटिकुंसत्व ॥२११॥ कुटिकुंसयो परतो भ्रुवः मो भवति अन्यतरदेषः । भ्रुकुटि । भ्रकुटि । भ्रुकुस । भ्रकुसः ।

खित्यघे हवि ॥ २१२ ॥ अजंतस्याद्य मो भवति खित्कृति परत । खट्वमन्या । हरिणिमन्या । कालिमन्या । रोहिणिमन्या । अघ्यरिति किं । दोषामन्यमहः-। दिवामन्या रात्रि

मुमच ॥ २१३ ॥ अघतस्यास्ये मुम् भवति खित्कृति परत । जनमेजय । स्तनं धयः । प्रियंवद । क्षेमंकर । अच इति किं । विद्वन्मन्य ।

अमेकाचोऽम्वत् ॥ २१४ ॥ एकाचोऽम्व तस्याम् भवति खित्कृति अमीष चास्मिन् कार्ये स्यात् । गामन्य । स्त्रीमन्य । नरंमन्य । एकाच इति किं । लक्ष्मीमन्या । अच इति किं । भिन्मन्य ।

सत्यागदास्तो कारे ॥ २१५ ॥ सत्या दीनां कारे पर मुम् भवति । सत्यंकार । अग दंकार । अस्तुंकार ।

*भ्राष्ट्राग्न्यारिंधे ॥ २१६ ॥ इंधे यो मुम् भवति भ्राष्ट्राग्न्याः । भ्राष्ट्रमिंध । अग्निमिंध ।

×भद्रोष्णयोः करणे ॥ २१७ ॥ अनयोः करण यो मुम् भवति । भद्रंकरणं । उष्णंकरण ।

+गिलगिलगिलयोरगिलस्य ॥ २१८ ॥ गिलान्मुक्तस्याजंतस्य गिलगिलगिल्यो मुम् भवति । तिमिंगिलः । तिमिंगिलगिलः । अगि लस्येति किं । तिमिंगिलं गिलतीति तिमिं गिलगिलः ।

+धेनुभव्याभव्यदिनकालंपृणानन्यासमिरयाः ॥२१९॥ धेन्वादीनां भव्यादिषु मुम निपात्यः । धेनुंभव्या । मध्यंदिनं । कालंपृण । अन भ्यासमित्य ।

*रात्रेः कृत्यस्य ॥ २४० ॥ रात्रेः कृदन्ते खौ मुम् भवति अकार्यन्तस्याचन्तस्य मतेन । रात्रिंचरः । रात्रिचरः । रात्रिमाटः । रात्र्याटः ।

नञोऽन् ॥ २४१ ॥ नञः अन् भवति चौ परतः । अनमः । अहिंसा । अस्तेयं ।

अचि ॥ २४२ ॥ नञः अजादौ परे अन् भवति । अनुपमो जिनः । अनंतः अनादिः । पुनः सूत्रं णकारनिवृत्त्यर्थं ।

*क्षेपे मिङि ॥ २४३ ॥ नञोऽन् भवति क्षेपेऽर्थे मिङि । अपचसि त्वं जाल्म । क्षेप इति किं ? अपचसि जाल्म ।

*एकादन्नमाऽक्षौ ॥ २४४ ॥ एकशब्दात् नञोऽन्नश्चौ स्तः चौ परे । एकेन न विंशतिः एकान्नविंशतिः । एकान्नविंशतिः । एकान्न त्रिंशत् । एकान्नत्रिंशत् ।

नगो वाऽप्राणिनि ॥ २४५ ॥ नग इति निपात्यतेऽप्राणिन्यर्थे वा । न गच्छन्तीति नगा । नगाः वृक्षाः पर्वता वा । अप्राणिनि इति किं ? अगः वृषलः शीतेन ।

सहस्य सः खौ ॥ २४६ ॥ सहस्य स आदेशो भवति चौ । साश्वत्थं । सपलाशं । खा विति किं ? सहयुध्वा ।

*अदृश्याधिकारस्थे ॥ २४७ ॥ अदृश्यार्थेऽधिके दृश्ये च वर्तमानस्य सहस्य सो भवति चौ परतः । ज्योतिषमधीते । सद्रोणा खारी । समाषः कार्षापणः । सपिशाचा वात्या ।

ऐकाले ॥ २४८ ॥ इत्ये सहस्य सो भवति अकाले । सचक्रं धेहि । सधुरं प्राज । अकाल इति किं ? सहपूर्वाह्णं । सहापराह्णं भुंक्ते ।

वा नीचे ॥ २४९ ॥ नीचे सहस्य सो भवति चौ वा । सपुत्रः । सहपुत्रः पिता । सच्छात्रः सहच्छात्रः आगतः । नीच इति किं ? सहयुध्वा ।

नाशिष्यगोवत्सहले ॥ २५० ॥ सहस्य सो नास्ति आशिषि अगोवत्सहलेषु परतः । स्वस्ति सह देवाय गुरवे स्वस्ति राज्ञे सहकोकाय । आशिषीति किं ? सकाशः । अगोवत्सहल इति किं ? स्वस्त्यस्तु सगवे सहगवे तुभ्यं सवत्साय सह वत्साय तुभ्यं । सहलाय सहहलाय तुभ्यं ।

*समानस्य धर्मादिषु ॥ २५१ ॥ समानस्य सादेशो भवति धर्मादिषु परेषु । सधर्मा । सपक्षः । समानीयः । सरूपाः । सनाम । सवर्णः । सवय । सनामा । सपुरित्यादि ।

सब्रह्मचारी ॥ २५२ ॥ समानस्य स निपात्यो ब्रह्मचारिणि चौ । समानो ब्रह्मचारी सब्रह्मचारी ।

*दृग्दृशदृक्षे ॥ २५३ ॥ समानस्य सो भवति दृगादिषु परतः । सदृक् । सदृश । सदृक्षः । अप्रत्ययस्यपुत्रार्थं ।

किमिदमोः कीश् ॥ २५४ ॥ किमिदमोः कीश् इत्येतावादेशो भवतः दृगादिषु परतः । किमास् । कीदृग् । कीदृशः । कीदृक्ष । ईमास् । ईदृक् । ईदृश । ईदृक्ष ।

*आ ॥ २५५ ॥ पूर्वसूत्रात् सर्वादेराकारादेशो भवति दृगादिषु परतः । अन्यादृग् । अन्यादृश । अन्यादृक्षः । तावान् । तादृग् । तादृशः । तादृशी । तादृक्षः । यावान् । यादृग् । यादृश । यादृशी । यादृक्षः । मवादृक् । भवादृश । त्वादृक् । मादृश । युष्मादृशः । अस्मादृश ।

*विष्वग्देवयोश्च टेरद्र्यञ्चौ क्वौ ॥ २५६ ॥ विष्वग्देवयोः सर्वनाम्नश्च टेरद्रिरादेशो भवति अञ्चतौ क्व्यन्ते परतः । विष्वद्र्यङ् । देवद्र्यङ् । सध्र्यङ् । तद्र्यङ् । कद्र्यङ् । युष्मद्र्यङ् । अस्मद्र्यङ् । मवद्र्यङ् । देवद्रीची । सवद्रीची । विष्वग्द्रच

स्नीरिनि किं ? पाग्राइ ।

*संसहयो समिसध्री ॥ २५७ ॥ मसह स्थाने समिमम्रि इत्येतानादेशौ भवत श्चवतौ परत । सम्यङ् । सम्यङ् ।समीचीसध्रीची।

*तिरसः तिर्य्ये ॥ २५८ ॥ तिरसः तिरि इत्ययमादेशो भवति भकारादावचतौ परत । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिर्यग्भ्यां । ए इति किं ? तिरश्चः । तिरश्ची ।

*द्व्यन्तर्गेरीदपोऽनाप् ॥ २५९ ॥ द्व्यन्त स्भ्यो भनवणान्तात् गेश्चाप ईत्व स्यात् । द्वीपः । अन्तरीपं । समीपं । नीपं । वीपं । भनापिति किं ? मापं । परापं ।

वेदेऽनोदः ॥ २६ ॥ वेदार्थेऽनो पर स्याप उभवति । अनूपः । वेदे इति किं ? अन्वीपो ग्राम ।

छकारकेऽन्यस्य दुक ॥२६१॥ छे कारके चान्यस्य दुगागमो भवति।अन्यदीयं।अन्यत्कारकं।

* रागोत्सुकोत्याशितास्थास्थाशिष्यतामस्य ॥ २६२ ॥ तावमातवर्जितस्यान्यस्य दुगागमो भवति रागादिषु परत । अन्यद्राग । अन्य दुत्सुक । अन्यदूतिः । अन्यदाशितः । अन्य दास्था । अन्यदाशा । अन्यदाशीः ।अतामस्येति किं ? अन्यस्यान्येन वा रागः—अन्यरागः ।

वाऽर्थे ॥ २६३॥ भतामातस्यान्यस्यार्थे वा दुग भवति । अन्यदर्थः । अन्यार्थ ।

+ण्यस्येङ्ग वञ्चेदुक मातरि ॥२६४॥ण्यान्तस्य वसे भकार मकार ककारादि मातरि घौ वा इङ्ग भवति । कारीषगन्ध्या माता यस्य कारीषगं धीमात । कारीषगन्ध्यामात । कारीषगंधीमाता । कारीषगन्ध्यामाता । कारीषगंधीमातृकः । कारी षगन्ध्यामातृकः । ण्यस्येति किं ? इभ्यामाता । व इति किं ? कारीषगन्ध्यामाता ।

*बंधौ ॥ २६५ ॥ ण्यस्य व बंधौ परे ईङ्ग भवति । कारीषगन्धीबन्धु । कौमुदगन्धीबन्धु ।

*पे पुत्रपत्योः ॥ २६६ ॥ पसे पुत्रपत्योः ण्यस्य ईङ्ग भवति । कारीषगंधीपुत्र । कारीष गंधीपतिः । कौमुदगंधीपुत्रः । कौमुदगंधीपति । प इति किं ? कारीषगन्ध्यापतिग्रामः । पुत्रपत्यो रिति किं ? कारीषगन्ध्याकुलं ।

कत्काः पत्रपि ॥२६७॥ को कद् भवति वसे भजादौ घौ पर । कदज । कदर्थ । कद सर्न । प इति किं ? किमो राजा । कुष्ट्रः । कथः । भचीति किं ? कुमोजनं ।

रथवदे ॥ २६८॥ कोः कद भवति रथ वदयोः परतः । कद्रथ । कद्वदः ।वसेऽपि-कद्रथो राजा । कद्वदा सम ।

तृणे जातौ ॥ २६९ ॥ को कत् भवति तृणे घौ जात्यर्थे । कत्तृणं । कुतृणान्यन्यत्र ।

कत्त्रिः ॥ २७० ॥ कोः किमो वा त्रौ घौ परे कन्निपात्य । कत्त्रयः । कत्त्रि ।

का पथ्यक्षे ॥ २७१ ॥ कोः का भवति पथ्यक्षयोः परत । कापथ । काक्ष ।

*भल्पे ॥ २७२ ॥ ईषदर्थे कोः का भवति। ईषन्मधुरं–काममधुरं । काकटुकं । काकवणं ।

पुरुषे वा ॥ २७३ ॥ कोर्वा का स्यात् पुरुषे परतः । कापुरुषः कुपुरुषः ।

कवं चोष्ण ॥ २७४ ॥ कोः कवादेशो भवति का च वा उष्ण परे । कवोष्णं । कोष्णं । कदुष्णं ।

×मांस्पाकमांस्पचने ॥ २७५ ॥ मांसस्य पाकपचनयोःपरत सं वा निपात्यतेमांस्पाकः । मांसपाकः । मांस्पचनं । मांसपचनं ।

×सम सं तत ॥ २७६ ॥ समस्तते परत स वा स्यात् । सततं । संततं ।

•हलो यभिकः ॥ २ ॥ गोरयवधात्कः परस्य यभिगतस्य दीर्घो भवति । संवीतः । शूनः । आहूत । बीन । हल इति किं ? उत । उतवान् । उति । उत्वा । गोरिति किं ? भिर्वं । दुर्व्वं ।

नाम्यतिसृचतसृ ॥ ३ ॥ तिसृ चतसृवर्जितस्य गोर्दीर्घो भवति नामि परे । सर्वज्ञानां । मुनीनां । साधूनां । नामीति किं ? चर्मणां । अतिसृचतसृ इति किं ? तिसृणां । चतसृणां । गोरिति किं ? किमिणां पश्य । परमणां पश्य ।

नुर्वा ॥ ४ ॥ नुर्नामि परे वा दीर्घो भवति । नृणां पतिः । नृणां पतिः ।

नोपः ॥ ५ ॥ नकारान्तस्य गोरुपो दीर्घो भवति नामि परतः । पंचानां । सप्तानां । अष्टानां । नवानां ।

घञ्झौ ॥ ६ ॥ झिवर्जिते घे नोपो दीर्घो भवति । वनानि । राजा । राजानौ । राजानः । राजानं । तक्षा । तक्षाणौ । अझाविति किं ? हे राजन् ।

अस्महतोः ॥ ७ ॥ सकारान्तस्य महतश्च घेऽझौ नोपो दीर्घो भवति श्रेयांसि । महांसि सर्पींषि । धनूंषि । श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसं । श्रेयांसौ । महान् । महान्तौ । महान्तः । महान्तं । महान्तौ । अझाविति किं ? हे श्रेयन् हे महन् ।

स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणां ॥ ८ ॥ स्वस्रादीनां तृन्तानां अपश्च घेऽझौ दीर्घो भवति । स्वसारौ । स्वसारः । स्वसारं । स्वसारौ । नप्तारौ । नेष्टारौ । त्वष्टारौ । क्षत्तारौ । होतारौ । पोतारौ । प्रशास्तारौ । परिवारौ अनाप्यमानाम् । कर्तारौ । कर्तारः । आपः । स्वापि तदा यानि । नप्त्रादिग्रहणं नियमार्थं । उणादिसिद्धानामेषामेव दीर्घो नान्येषां । मातरौ । पितरौ । भ्रातरौ । दुहितरौ ।

इनहन्पूषार्यम्णां शौ ॥ ९ ॥ एषामुपो दीर्घो भवति शौ परे । बहुदण्डीनि । बहुवाग्मीनि कुलानि । बहुभ्रूणहानि । बहुपूषाणि । बह्वर्यमाणि । घऽझाविति सिद्धे नियमार्थोऽयं योगः । एषां शावेव दीर्घो नान्यत्र । दण्डिनौ । वृत्रहणौ । पूषणौ । अर्यमणौ ।

सौ ॥ १० ॥ इनादीनामुपो दीर्घो भवति सौ परे । दण्डी । छत्री । वाग्मी । तपस्वी । वृत्रहा । भ्रूणहा । पूषा । अर्यमा ।

अत्वसोऽन्यादेः ॥ ११ ॥ अत्वन्तस्यासन्तस्य चान्यादेः सावपो दीर्घो भवति । भवान् । गुणवान् । मुक्तवान् । सुपयाः । पेयाः । चन्द्रमा । अन्यादेरिति किं ? पिण्डग्रः । चर्मवः । इष्वस्या स्तीति इष्वाः । अक्राविति किं-हे भवन् । हे सुपयः ।

वस्य झमयकोः किङति ॥ १२ ॥ वसंज्ञकस्य गोरुपो दीर्घो भवति झलादौ किङति की च परतः । शान्तः । प्रशान्तः । दान्तः । प्रदान्तः । तान्तः । संतान्तः । प्रतान् । प्रशान् । प्रदाम्यतेरिति किं ? पचितः । झमयकोरिति किं ? गम्यते । रम्यते । किङीति किं ? यन्ता ।

•हन्यपां सनि ॥ १३ ॥ हन्तेरिणिगिङादेशस्य गमेरचन्तानां च दीर्घो भवति झलादौ सनि परतः । जिघांसति । जिगांस्यते । अधिजिगांस्यते । अधिजिगांसते । चिचीषति । चिकीर्षति ।

तनो वा ॥ १४ ॥ तनोतेः सनि झलादौ वा दीर्घो भवति । तितांसति । तितंसति । झलीति किं ? तितनिषति ।

क्रम' चित्व ॥ १५ ॥ क्रमःक्त्वि स च वा दीर्घो भवति । क्रान्त्वा । क्रान्त्वा । झलाद्यावित्येव क्रमित्वा ।

प्रस' घूर्ड के वा ॥ १६ ॥ घोस्त्वकारान्तयो

ग्रन्थमानसौ स्तः वसेत्र सकारौ किति को च परत । मस्तः विमः । पदः । पृष्टवान् । पृष्ट्वा । पृष्टिः । सम्यपाट् । स्योमा । स्यूतः । स्यूतवान् । स्यूत्वा । स्यूति । परस्यू । पूतः । पूतवान् । पूत्वा । पूतिः । मक्षपूः । मक्षपुवौ, मक्षपुवः । हिरण्यपूः । हिरण्यपुवौ । हिरण्यपुव ।

च्छ्वोर्शूडनुनासिके च ॥ १७ ॥ च्छ्वादीनां वकारस्यान्त्यस्य ऊभवति क्ङसयोः को च । मूर्ति । जू । जुरौ । जुरः । तूर्वि । तूः । तुरौ । तुरः । तूर्ण । तूर्णवान् । ओमा । मूर्त । मूतवान् । मूः मुवौ । मुवः । ऊतिः । ऊः । उवौ । उवः । मूर्तिः । मू । मुवौ । मुव ।

र सं ॥ १८ ॥ रेफस्परस्य छ्वोः सं भवति । हुर्छा—हूर्णः । हूर्णवान् । हूः । हुरौ । हुरः । हूर्ति मुर्छा—मूः । मुरौ मुरः । मूर्तः । मूर्तवान् । मूर्तिः । तुर्वी—तूर्णः । तूर्णवान् । तूः । तुरौ । तुरः । धुर्वी—धूः । धुरौ । धुरः । धूर्णः । धूर्णवान् । धूर्ति ।

●ईटीटः ॥ १९ ॥ इटः परस्य ईटि परे सवाद् सेः सं भवति । अदेवीत् । असवीद् । अको षीत् । अमोषीत् । ईटीति किं ? अकरिषु । इट इति किं ? अकार्षीत् ।

●असिद्धोऽत्रामादपुम्बुक् ॥ २०॥ असिद्ध भवत्यामाध्यायस्य अत्र शास्त्र पुम्बुग्वर्जिते क र्तव्येऽपि, शामि इत्यत्र एतस्मा आमकयोः इत्यो इत्यकृत निमित्तमाप्तमसिद्धत्वात् भवति । नहीं स्यत्र अभावे कृतेऽन्तो हेरुप् मासमसिद्धत्वान्नास्ति । अत्रेति किं ? अमावि । एधि नत्व नासिद्धं । आमादिति किं ? ररंधिव । ररंधिम । एतस्से पुम्बासिद्धं । अपुम्बुगिति किं ? उपार्धिवे । अतृप । आमि दमि च कर्तव्ये पुगगुको नासिद्धौ।

भामः स ॥ २१ ॥ मादपरस्य मकारस्य स भवति । ध्यमाक्षि घर्मे । भमाक्षि घर्पे । भामिति किं ? नद्नः । सानुबन्धग्रहणं किं ? यत्नानां ।

इमुकः क्ङित्यनिदितः ॥ २२ ॥ इमुके मकारस्य ल भवति अनिदितो गा क्ङिति परे । ध्वस्तः । ध्वस्तवान् । दनीध्वस्यते । सूस्यते । सनीसूस्यते । इम्ग्रहणं किं ? नीतः । उक इति किं ? नद्धः । क्ङितीति किं ? ध्वसित्वा । स्रंसित्वा । अनिदित इति किं ? संस्यते । शाशं स्यते । मैन्स्यते । मामंस्यत ।

+पॄपसर्गोगविकारोपताप ॥ २३ ॥ कॅपिक म्पोर्नसं भवति भयविकारोपतापयोः क्ङिति । विकपित । विकगित । विकपिता विकंगितोऽन्यत्र ।

गमहन्जनखनघसोऽनाङि ॥ २४ ॥ गमादीनां इत्वः सं भवति क्ङिति अनङ्परे । जग्मतुः । जघ्नतुः । जज्ञुः । जज्ञे । जज्ञाते । जक्षिरे । चख्नतुः । जक्षतु । जक्षतु । जक्षु । अनङीति किं? अगमत् । अघसत् ।

●द्युमर्संश्च धपि ॥ २५ ॥ दंशिसंज्यानस्सं भवति धपि परे । दशति । दशत । दशंति । सजति । सजत । सजंति ।

रंजेः ॥ २६ ॥ रंजेर्नकारस्य धपि परत सं भवति । रजति । रजत ।

णौ मृगरमण ॥ २७ ॥ रंजेर्नस्य णौ परे सं स्यात् मृगरमणार्थे । रजयति मृगान् व्याध । मृगरमण इति किं? रंजयति सर्वान् नट ।

घञि भावकरणे ॥ २८ ॥ रंजेर्नसं भवति भावे करणे च घञि परतः । रजनं रज्यतेऽनेन वा रागः । भावकरण इति किं? रज्यतेऽस्मिन्निति रंगः ।

स्यदो जवे ॥ २९ ॥ स्यंदेर्घञि नसमन्त्य च निपात्यते जवेऽर्थे । गोस्यदः । अश्वमोस्यदः ।

अव इति किं ? धुतम्भदः ।

• दशनावोदैधौद्मप्रश्रथहिमश्रथाः ॥३०॥ दशनादयो निपात्यन्तेऽनकादौ परतः । दशनः । दंशेर्नस्य । अवोदः । उन्दिर्धमि नस्य । एधः । इन्धेर्धमि नखेपौ । औद्मः । उन्दिमनि नखेपौ । प्रश्रथः । हिमश्रथः । प्रहिमाभ्यां श्रथेर्धमि नखमै समासौ निपात्यौ ।

नाञ्चोऽर्चे ॥३१॥ अञ्चेः पूजायामर्थे नखं न भवति । अञ्चितः शान्तिनाथः । अञ्चितवान् जिनं । अञ्चित्वा गुरून् गतः । अर्च इति किं ? उदक्तमुदकं कूपात् ।

क्त्वि स्कन्दस्यन्दोः ॥३२॥ अनयोः क्त्वा परे नखं न स्यात् । स्कन्त्वा । स्यन्त्वा । क्त्वीति किं ? प्रस्कद्य । प्रस्यद्य ।

•नशमार्जा ॥ ३३ ॥ नशेर्जकारान्तस्य च क्त्वि परे नखं वा स्यात् । नष्ट्वा । नंष्ट्वा । रक्त्वा रंक्त्वा । भक्त्वा । भंक्त्वा ।

भञ्जेर्मौ ॥ ३४ ॥ भञ्जेर्मौ परतः नखं वा स्यात् । अभाजि । अभञ्जि पापं मुनिना ।

•शासोऽङ्हलीत् ॥ ३५ ॥ शासो गोरुपधा इद्भवति अङि हलादौ च क्ङिति परतः । आशिषत् । शिष्टः । शिष्टवान् । शिष्ट्वा । शिष्टिः । शिष्यः । शिष्मः । अङ्हलीति किं ? शशासतुः । शशासुः ।

क्वौ ॥ ३६ ॥ शास उकः क्वावित्वं स्यात् । आर्यशीः ।

शा हौ ॥ ३७ ॥ शासः शा इत्ययमादेशो भवति हौ परे । प्रशाधि । अनुशाधि ।

हन्तेर्जः ॥ ३८ ॥ हन्तेर्ज इत्ययमादेशो भवति हौ परतः । जहि मन्युं पापं वा ।

•हन्मन्यम्रमनम्गम्वनतितनादेर्ङ्खं झलि ॥ ३९ ॥ हनादीनां वनतेस्तनादीनां च झलादौ क्ङिति परे ङस्य खं स्यात् । हतः । हतवान् । हत्वा । हतिः । मतः । मतवान् । मत्वा । मतिः । यतः । यतवान् । यत्वा । यतिः । रतः । रतवान् । रत्वा । रतिः । नतः । नतवान् । नत्वा । नतिः । गतः । गतवान् । गत्वा । गतिः । वतः । वतवान् । वत्वा । वतिः । ततः । ततवान् । तत्वा । ततिः । क्षतः । क्षतवान् । क्षत्वा । क्षतिः । क्षितः । क्षितवान् । क्षित्वा । क्षितिः । ऋतः । ऋतवान् । ऋत्वा । ऋतिः । तृतः । तृतवान् । तृत्वा । तृतिः । घृतः । घृतवान् । घृत्वा । घृतिः । वतः । वतवान् । वत्वा । वतिः । हनादीनामिति किं ? शान्तः । दान्तः । झलीति किं ? हन्यते । मन्यते ।

प्ये ॥ ४० ॥ हनादीनां प्य परे खं भवति । प्रहत्य । प्रमत्य । प्रतत्य । प्रयत्य । प्रक्षत्य ।

वा मः ॥ ४१ ॥ हनादीनां मान्तानां प्ये परे खं वा भवति । नियत्य, नियम्य । विरत्य, विरम्य । प्रणत्य, प्रणम्य । आगत्य आगम्य ।

•गमादीनां क्वौ ॥ ४२ ॥ एषां खं भवति क्वौ परतः । वनगत् । कलिङ्गगत् । मोक्षगतो मुनयः । संयत् । सुमत् । परीतत् । सुक्षत् ।

न क्तिचि दीर्घः ॥ ४३ ॥ हनादीनां क्तिचि परे खं दीर्घश्च न भवति । हन्ताद्विति हंतिः । मंतिः । यंतिः । रंतिः । नंतिः । गंतिः । तंतिः ।

वन्याः ॥ ४४ ॥ ङान्तस्य गोः वनि परे आत्वं भवति । विजावा । अग्रेगावा, दधिक्रावा ।

जन्सन्खनां ॥ ४५ ॥ एषां ङस्य झलादौ क्ङित्याकारादेशो भवति । जातः । जातवान् । जात्वा । जातिः । सातः सातवान् सात्वा । सातिः । खातः । खातवान् । खात्वा । खातिः ।

सनि ॥ ४६ ॥ जनादीनां सनि झलादौ

॥ ६५ ॥ ग्रहहनेभ्यो हनृग्राम्यां च परेषां स्यादीनां भावकर्मे मिङ् वा स्यात् । अग्राहिषातां । अमहीषातां । ग्राहिष्यते । महीष्यते । ग्राहिषीष्ट । ग्रहीषीष्ट । ग्राहिता । महीता । अस्त्र-मिषातां । अम्मासातां । स्मायिष्यते । स्मास्यते । स्मायिषीष्ट । स्मासीष्ट । स्मायिता । स्माता । अघाषि षातां । अघषातां । अग्स्यायिषातां । अस्तो षातां । घायिष्यते । घेष्यते । स्तायिष्यते । स्तोष्यते । अघानिषातां । अहसातां । अघनि षातां । घानिष्यते । हनिष्यते । घानिषीष्ट । वधि षीष्ट । घानिता । हंता । अदर्शिषातां । अह क्षातां । दर्शिष्यते । द्रक्ष्यते । दर्शिषीष्ट । द्रक्षीष्ट । दर्शिता । द्रष्टा । स्यादीनामिति किं ? ददे दानं । अविरुध्यः केदारं । भाविति किं ? अभिष्यति केदारं । पविष्यति यवराशिं । महा दिमहणं किं ? पक्ष्यते ओदनः ।

दीडोऽचि किङति युक् ॥ ६६ ॥ दीडः क्डिस्यचा दौ परे युगागमो भवति । उपदिदीयाते । उपदिदीये । उपदिदीयाते । उपदिदीयिरे । अचीति किं ? उप दीयते । किङ्तीति किं ? उपदान ।

इटि चात्वं ॥ ६७ ॥ इस्थजादौ च क्डि त्यग परे आकारांतस्य खे भवति । पपिथ । जग्मिम । पपतु । पपु । आहृत् । प्रपा ।

ईर्ये ॥ ६८ ॥ आकारांतस्य ये परे ईत्वं भवति । देयं । धेय । स्थेयं ।

घुमास्थागापाहाक्सां हलि ॥ ६९ ॥ एषां हलादौ क्डिति ईद् भवति । दीयते । देदीयते । धीयते । देधीयते । धीतं वत्सेन । मीयते । ममीयते । स्थीयते । तष्टीयते । गीयते । जेगीयते । गीत । गीतवान् । पीयते । पेपीयते । पीतं । पीतवान् । पीत्वा । हीयते । हीना । हीनवान् । अवसीयते । अवसेषीयते । हलीति किं ? ददतुः ।

लिङ्येत् ॥ ७० ॥ घ्वादीनामेद्भवति लिङि परे । देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् ।

धाऽस्य स्कादेः ॥ ७१ ॥ आकारांतस्य स्कादेः स्यादीनस्य लिङ्येद्वा स्यात् । म्लेयात् । म्लायात् । ग्लेयात् । ग्लायात् । स्नेयात् । स्नायात् । अस्य इति किं ? स्लेयात् । स्क देरिति किं ? पायात् ।

न ल्ये ॥ ७२ ॥ घ्वादीनामीत्वं न स्यात् ल्ये परे । प्रदाय । प्रधाय । प्रमाय । प्रस्थाय । प्रगाय । प्रपाय । अवहाय । अवसाय ।

मर्थेङः ॥ ७३ ॥ मेङः ल्ये इत्वं वा स्यात् । अपमित्य । अपमाय ।

*लुङ्लङ्लृङ्क्ष्वमाङाड्‌द् ॥ ७४ ॥ गोरडागमो भवति लुङादिषु परत माङ्योगं विहाय । अकार्षीत् । अकरोत् । अकरिष्यत् । अहार्षीत् । अहरत् । अहारिष्यत् । ऐक्षिष्ट । ऐक्षत । ऐक्षि ष्यते । औब्जीत् । औब्जत् । औब्जिष्यत् । अमाङ इति किं ? मा हार्षीत् । मा भवान् का-र्षीत् । मा स्म करोत् । मेक्षिष्ट । मा स्मेक्षत । मोब्जीत् । मानिरुक्षीत् । मास्म निरुंधीत् । मा स्मनिरुधत् । अम इति नियुर्थ ।

*इणश्नुभुभ्रुवोऽचीयुभ्यो ॥ ७५ ॥ एषां इवर्णोवर्णयोरियुवौ स्तः अजादौ परे । आप्नु वति । अश्नुवति । चिक्षियतुः । चिक्षियु । तुष्टुवतुः । तुष्टुवुः । भुवौ । भ्रुवः । इण्श्नु इति किं ? चिन्वंति । सुन्वंति । अचीति किं ? नीः । लूः ।

घस्यास्ते ॥ ७६ ॥ घस भ्वो इयुवौ स्तः अलेऽपि परतः । इयर्ति । इयृत । इयुति । इयेष । उवोष । अस इति किं ? ईयतुः । ईयु । ऊयतु । ऊयु ।

स्त्रियाः ॥ ७७ ॥ स्त्रीशब्दस्य मवत्यचि परतः । स्त्रियौ । स्त्रियः ।

वाऽम्शसोः ॥७८॥ स्त्रिया वा इय भवति अम्शसो परतः। स्त्रियं । स्त्रीं । स्त्रियः । स्त्रीः।

आतः ॥ ७९ ॥ आतः आकारो भवति अमशसोः परतः । गां । गा । द्यां । द्या ।

*यणिपः ॥ ८० ॥ इणाऽप्यचि यण् भवति । यंति । यंतु । यन् ।

×वकः ॥ ८१॥ इको यण् वा भवति अचि परत ।अधीयंति । अधियंति । अधीयन् ।अधियन्।

एर्गिनाकधातुकः।स्सुधियः ॥८२ ॥ गिना कुधात् परस्माद् उक परस इवर्णस्य यण् भव त्यचि सुधीशब्दं त्यक्त्वा । सुन्यौ । सुन्यः । परिण्यौ । परिण्यः।ग्रामण्यौ । ग्रामण्यः । सना न्यौ । सेनान्यः । चिन्यौ । चिन्यावे । निन्य तुः । निन्युः । गिनाकधातोरिति किं । नियौ । नियः । उक इति किं । यवक्रियौ । असुधिय इति किं । सुधियौ । सुधियः ।

सुष्योः ॥ ८३ ॥ गिनाकधातुकः परस्मो वर्णस्य सुप्यजादौ परे यण् भवति । सुल्वौ । सुल्वः।सकृल्वः।सुधीति किं । ग्रसुवनः।।उलुवुः ।

दृन्करपुनवर्षाभ्या स्वः ॥ ८४ ॥ एभ्यो भवतयण् भवति अजादौ सुपि पर । दृन्भ्वौ । दृन्भ्वः । करभ्वौ । करभ्वः। पुनर्भ्वौ । पुनर्भ्वः । वर्षाभ्वौ । वर्षाभ्वः । नियमार्थं—एभ्य एव भ्वो यण् भवति नान्यस्मात् कर्मभुवौ । कर्मभुवः ।

भुवोऽसिटाबुक् ॥ ८५ ॥ भुवो बुक् भवति लुङ्लिट्योरचि परे । अभूवम् । अभूवन् । बभूव । बभूवुः ।

दाग च ॥ ८६ ॥ होरुकारस्य वकारादेशो भवस्यजादौ च परतः। जुहुवतु । ग इति किं । जु हुवतु । जुहुवुः ।

गाहरुहुक ॥ ८७ ॥ गाहेरुदुकः ऊट् भवति अचि परतः । निगूहत । निगूहयति । निगू हकः । साधुनिगूही । निगूहं निगूहं निगूहो वर्तते । गूहति । उपगूहक । गोहरिति विकृत- निर्देश",किं"निजुगुह । निजुगूहतु",। भवीविर्षि । निगाहा । निगाहं । निगाहयं ।

दोषो णौ ॥८८॥ दोषः उको णौ परतः ऊट् भवति । दूषयति । दूषयतः । दूषयति । णौ इति किं'दोषः ।

वा चित्त ॥८९॥ दोषो णावुकःऊद्वा स्याद् चित्तार्थे । चित्त दूषयति चित्त दोषयति । प्रज्ञां दोषयति । प्रज्ञा दूषयति । चित्त इति किं'एका तवाद्यमकोर्थ दूषयति ।

* घटादिकमयनुजनीजूषक्नसकनरं ज्यमाऽपयपस्खलकमयमयम माऽम्युम्यास्तु दीर्घा ॥ ९ ॥ पवपूर्वम्कलिवर्जितानां घ- टादीनां कर्मेकमनीजूषक्नसकनरजनीनां अमं तानां च कमचमामिवर्जितानां चोकम मो भवति णौ अमुमिरं तु दीर्घा । घटयति । घट घट । घाटघाटं । अघटि । अघाटि । व्यथ यति । व्यथव्यथं । व्याथंव्याथं । अव्यथि । अव्याथि । कगयति । कगंकगं । कागंकागं । अकगि । अकागि । वनयति । वनवनं । वानं वानं । अवनि । अवानि । जनयति ।जनंजनं । जानंजानं । अजनि । अजानि ।जरयति ।जरंजरं। जारंजारं । अजरि । अजारि । स्नसयति । स्नसं स्नसं । स्नासं स्नासं । अस्नसि । अ स्नासि । क्नसयति । क्नसंक्नसं ।क्नासं क्नासं । अक्नसि । अक्नासि । रञयति । रञं रञं । राञं राञं । अरञि । अराञि । गमयति । गमंगमं । गामंगामं । अगमि अगामि । दमयति । दमंदमं । दामंदामं । अदमि । अदामि । अप

सरतुः । विशसरिथ । चफरतु । चफरिथ ।

रधे राधेः ॥ १२१ ॥ वधेऽर्थे राधेर्किन्मेचखसे स्तः । रेधतुः । रेधुः । रेधिथ । वध इति किं ? आरराधतुः ।

*न शासदद्वादेः ॥ १२२ ॥ शसददवादीनां च क्डिन्मेचखसे न स्तः । विशशसतुः । विशशसुः । विशशसिथ । ददवे । ददवाते । ददविरे । ववमतुः । ववणुः । ववमिथ । ववमे ववमाते । ववम्रिरे । ववसे । ववसाते । ववसिरे ।

*वा भ्रम्जसत्रसफणाम् ॥ १२३ ॥ भ्रमादीनां क्डिन्मेचखसे वा स्तः । भ्रेमतुः । भ्रमुः । भ्रेमिथ । बभ्रमतुः । बभ्रमुः । बभ्रमिथ । वेमतुः । वेमुः । वेमिथ । ववमतुः । ववमुः । ववमिथ । त्रेसतुः । त्रेसुः । त्रसिथ । तत्रसतुः । तत्रसुः । तत्रसिथ । जेरतुः । जेरुः । जेरिथ । जजरतुः । जजरुः । जजरिथ । भ्रमेरादेशादित्वाद् वमेर्वादित्वात् त्रसेरनेकहल्त्वात् मृषः फणिनिर्देशाच्चाप्राप्तत्वादप्राप्तविकल्पः ।

*फणाम् ॥ १२४ ॥ फणादीनां सप्तानाम् चखसे वा स्तः क्डिति किति सटि च परतः । फेणतुः । फेणुः । फेणिथ । पफणतुः । पफणुः । पफणिथ । रेजतुः । रेजुः । रेजिथ । रराजतुः । रराजुः । रराजिथ । भ्रेजे । भ्रेजाते । भ्रेजिरे । बभ्राजे । बभ्राजाते । बभ्राजिरे । भ्रेसे । भ्रेसाते । भ्रेसिरे । बभ्रासे । बभ्रासाते । बभ्रासिरे । भ्लेसे । भ्लेसाते । भ्लेसिरे । बभ्लासे । बभ्लासाते । बभ्लासिरे । स्येमतुः । स्येमुः । स्येमिथ । सस्यमतुः । सस्यमुः । सस्यमिथ । स्वेनतुः । स्वेनुः । स्वेनिथ । सस्वनतुः । सस्वनुः । सस्वनिथ ।

*श्रन्थिग्रन्थिदम्भिस्वञ्जीनां च ॥ १२५ ॥ श्रन्थिग्रन्थ्योः क्डिति किति सेटि च परतः चखसे वा स्तः वस्य च । श्रेथतुः । श्रेथुः । श्रेथिथ । शश्रन्थतुः । शश्रन्थुः । शश्रन्थिथ । ग्रेथतुः । ग्रेथुः । ग्रेथिथ । जग्रन्थतुः । जग्रन्थुः । जग्रन्थिथ ।

*दम्भे ॥ १२६ ॥ दम्भेः क्डिति क्डिन्मेचखसे स्तः नस्य च । देभतुः । देभुः ।

*थे वा ॥१२७॥ दम्भेरखसे स्तो नस्य च थे परे वा । देभिथ । ददम्भिथ ।

× पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतौ ॥ १२८ ॥ पादादीनां पदादयो भवन्त्यमे सुपि वा । पदा, पादेन । दद्भिः । दते । मसा । मासिकया । मासि । मासे । हृदि । हृदये । निशि, निशायां । असा, असृजा । यूष्णा, यूषेण । दोष्णा, दोषा । यक्ना, यकृता । शकना, शकृता । उदा, उदकेन । आसनि, आसने । अम इति किं ? पादं ।

अनञोऽर्वणोऽस्सौ ॥१२९॥ अनञः अर्वणः तृ आदेशो भवत्यसौ सुपि परे । अर्वन्तौ । अर्वन्तः । अर्वत्सु । अनञ इति किं ? अनर्वाणौ । असाविति किं ? अर्वा ।

भस्य ॥ १३० ॥ भस्येत्ययमधिकारो ज्ञेयः आपादपरिसमाप्तेः । तमेवादाहरिष्यामः ।

पादः पत् ॥ १३१ ॥ पादन्तस्य भस्य पदादेशो भवति । द्विपदः पश्य । द्विपदा । द्विपदी । त्रिपदः । त्रिपदा । त्रिपदे । त्रिपदी । चतुष्पदः । चतुष्पदी । व्याघ्रपदः । व्याघ्रपदी । वैयाघ्रपद्यः । भस्येति किं ? द्विपादौ । द्विपादः ।

* वसोर्वस्योट् ॥ १३२ ॥ भस्य वसन्तस्य वस्योट् भवति । विदुषः पश्य । विदुषा । विदुषी । पेचुषः । पेचुषा । पेचुषे । पेचुषी ।

श्वयुवमघोनोऽहृति ॥ १३३ ॥ श्वादीनां वस्योट् भवति अहृति परे । शुनः । शुना । शुने । शुनी । यूनः । यूना । यूने । यूनी । मघोनः । मघोना । अहृतीति किं ?

ढे लं ॥ १४९ ॥ उवर्णान्तस्य लं भवति ढे परे । मद्रबाह्वा अपत्यं माद्रबाहेय । बभ्वा अपत्यं बाभ्रेयः ।

*ण्यः ॥ १५० ॥ अवर्णान्तस्य च भस्य स भवति इति परे । दाक्षिः । चौडिः । नाभेय । रैहिणेय । कमण्डलेयः ।

ङ्यां ॥ १५१ ॥ अवर्णेवर्णयोः लं भवति ङीपि परत । गौरी । कुमारी । कुरुचरी । दाक्षी । प्लाक्षी ।

*मत्स्योङ्य ॥१५२॥ मत्स्यस्यान्तो यकारस्य ल भवति ङ्या परतः । मत्सी ।

सूर्यागस्त्ययोश्छे च ॥१५३॥ अनयोरन्ते यकारस्य ल भवति ङ्यां छे च परतः । सूर्यस्य भार्या सूरी । अगस्ती । सौरीयः । आगस्तीय । छे चेति किं ? सौर्ये तेजः ।

हलो इतः ॥१५४॥ हल परस्य इतो यकारस्य लं भवति ङ्यां परतः । गार्गी । वात्सी । हल इति किं ? वासुवेगी । इत इति किं ? मत्स्यी ।

क्यच्च्व्यनाद्वृत्यापत्यस्य ॥ १५५ ॥ क्ये च्वौ अनकाराद्यौ च इति हलः परस्यापत्यस्य यकारस्य ल भवति । गार्गीयति । गार्गायते । वात्सीयति । वात्सायते । गार्गीभूत । वात्सीभूत । गर्गाणां समूहः गार्गक । वात्सक । वात्सस्यायं वात्सीय । गार्गीयः । अनकारादाविति किं ? गार्ग्यायण । वात्स्यायनः । आपत्यस्येति किं ? सांकाश्ये भव सांकाश्यकः । काम्पिल्यक । हल इत्येव—आत्रेयक ।

राजन्यमनुष्यस्याके ॥ १५६ ॥ राजन्य मनुष्ययोर्यकारस्य लं मात्स्यके परतः । राजन्यानां समूहः राजन्यक । मानुष्यक ।

*तैष्यपौषे भे ॥ १५७ ॥ तिष्यपुष्ययोर्यकारस्य लं निपात्यते नक्षत्रविषय । तिष्येण गुरुणोपयुक्तः तैषः । पौष । भ इति किं ? तिष्यो देव ताऽस्य तैष्यः । पौष्यः ।

*सांत्वमातितमातिर्नानिपातिपद् ॥१५८॥ अतमादयः शब्दाः ह्रतिकादिनाम्ना वा निपात्यंत । अतिशयेनातिक अतम । अतितम । अतिकतमः । अर्थेऽतिकस्य तिमन्तस्य क्तान्तस्य च लं निपात्यंत । अतिकादागतः आतितः । अतिकतः । तमि वा लोप । अतिक साधुः अंतियः । अतिक्यः । घ कप् । अतिक सीद सीत्यतिपद् । अतिकसद् । क्विंत सति क लक्त्व वा स्त ।

*विल्वकादेश्छस्य ॥ १५९ ॥ बिल्वकादीनां छकारस्य ल भवति इति परतः । बिल्वा अस्यां संति बिल्वकीया नदी । तस्यां भवः बैल्वकः । वेणुकीया । वैणुकः । वेत्रकीया । वैत्रकः । भिकीया । भैकः ।

तुरिष्ठेमेयस्सु ॥ १६० ॥ तृशब्दस्य लं स्यात् इष्ठ इमनीयसौ परत । आतिशयन कर्तुमान् करिष्ठः । हरिष्ठ । करीयान् । हरीयान् । इमनभावप्रत्ययान्तार्थे ।

टे ॥ १६१ ॥ टेश्च ल भवति इष्ठेमेयस्सु परत । पटिष्ठ । पटोर्भावः पटिमा । पटीयान् । लघिष्ठ । लघिमा । लघीयान् ।

णाविष्ठवन्मूत्र ॥ १६२ ॥ मृदः इष्ठ इव कार्यं भवति णौ परत । पटुमाचष्टे—पटयति । लघयति । साधुमाचष्टे—साधयति । नरयति । कर्तृमंत—करयति । हर्तुमंत—हरयति ।

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यण पूर्व यक ॥ १६३ ॥ स्थूलादीनां यणः ल भवति इक पूर्व च इष्ठेमेयस्सु परत । स्थविष्ठः । स्थविमा । स्थवीयान् । दविष्ठः । दविमा । दवीयान् । यविष्ठः । यविमा । यवीयान् । ह्रसिष्ठ ।

हसिमा । ह्रसीयान् । क्षेपिष्ठः । क्षेपिमा । क्षेपीयान् । क्षोदिष्ठः । क्षोदिमा । क्षोदीयान् । स्थूलमाचष्टे—स्थवयति । दवयति । यवयति । ह्रसयति । क्षेपयति । क्षोदयति ।

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रपद्राघवृन्दाः ॥ १६४ ॥ प्रियादीनामिकारस्य लोपः स्यादिष्ठेमेयस्सु परतः । प्रेष्ठः । प्रेमा । प्रेयान् । स्थेष्ठः स्थेमा । स्थेयान् । स्फेष्ठः । स्फेमा । स्फेयान् । प्रापयति । स्थापयति ।

बहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां बंहिगर्वर्षित्रपद्राघवृन्दाः ॥ १६५ ॥ बहुलादीनां बंह्यादयो भवति इष्ठेमेयस्सु परतः । बंहिष्ठः । बंहिमा । बंहीयान् । गरिष्ठः । गरिमा गरीयान् । वरिष्ठः । वरिमा । वरीयान् । वर्षिष्ठः । वर्षिमा । वर्षीयान् । त्रपिष्ठ । त्रपिमा । त्रपीयान् । द्राघिष्ठः । द्राघिमा । द्राघीयान् । वृन्दिष्ठः । वृन्दिमा । वृन्दीयान् । बंहयति । गरयति । इत्यादि ।

बहोर्भूमावस्यास्य ॥ १६६ ॥ बहोर्भूमावो भवति अस्माद्गमेयसोरादेः ख । बहोर्भावः—भूमा । अतिशयेन बहुः भूयान् ।

*भूयिष्ठ ॥ १६७ ॥ बहोर्भूयादेशो भवतीष्ठे परतः । भूयिष्ठः ।

*ज्यायान् ॥ १६८ ॥ प्रशस्यस्य वृद्धस्य वा ज्यादेशास्तरस्मेयसोरास्य निपात्यं । अतिशयेन प्रशस्यः वृद्धो वा ज्यायान् । ज्यायांसौ । ज्यायांसः । ज्यायसी । ज्याय ।

*रः पृथुमृदुकृशभृशदृढपरिवृढस्यो ॥१६९॥ पृथ्वादीनां ऋकारस्य रेफादेशो भवतीष्ठेमेयस्सु परतः । प्रथिष्ठः । प्रथिमा । प्रथीयान् । प्रदिष्ठः प्रदिमा । प्रदीयान् । क्रशिष्ठ । क्रशिमा । क्रशीयान् । भ्रशिष्ठः । भ्रशिमा । भ्रशीयान् । द्रढिष्ठ । द्रढिमा । द्रढीयान् । परिव्रढिष्ठः । परिव्रढिमा । परिव्रढीयान् । प्रथयति । प्रदयति । क्रशयति । भ्रशयति । द्रढयति । परिव्रढयति । पृथ्वादेरिति किं ? भाविष्ठः । भाविमा । भावीयान् । भावयति । कृष्णिष्ठ कृष्णिमा । कृष्णीयान् । कृष्णयति ।

नैकाच ॥ १७०॥ एकाच टिर्ल न भवतीष्ठेमेयस्सु परतः । अतिशयेन स्रग्वान्—स्रजिष्ठः स्रग्वतो भावः—स्रजिमा । स्रजीयान् । स्रग्वंतमाचष्टे—स्रजयति । स्रविष्ठ स्रविमा । स्रवीयान् । स्रवयति । एकाच इति किं ? अतिशयेन वसुमान् वसिष्ठ ।

अनपत्येऽण्येन ॥ १७१ ॥ इन्नंतस्याऽनपत्यार्थे अणि परे टिर्ल न स्यात् । समंततः कुटनं सांकोटिनं । सांराविणं । सांमार्जिनं । सुपिन इद गौमिनं । दाण्डिनं । काण्डिनं । अनपत्ये इति किं ? वाहुबाहिनोऽपत्यं वाहुब ।

गाथिविदथिकेशिपणिगणिस्फादेः ॥१७२॥ गाथ्यादीनां स्फादयंतनो मधुर्क सन्न भवत्यणि परे । गाथिनोऽपत्यं गाथिनः । वैदथिनः । कैशिनः । पाणिनः । गाणिनः । स्थाणिपः । माथिनः । चाक्रिण ।

*श्नोऽवर्मण ॥ १७३ ॥ मन्नंतस्यावर्मणोऽनपत्य एवापि मधुर्क सन्न स्यात् । चर्मणा छन्नः चार्मणो रथः । साम देवता अस्य—सामन । वेम्न इदं वैमन । अनपत्य इति किं ? सुषाम्नोऽपत्यं—सौषामः । अवर्मण इति किं ? सौवर्म वर्मण । हैरण्यवर्मणः ।

ब्राह्म ॥१७४ ॥ ब्रह्मणोऽनपत्येऽपि टिर्ल निपात्य । ब्रह्मणोऽयं—ब्राह्मो मंत्रः । ब्राह्ममस्त्रं ।

जातौ ॥ १७५ ॥ जातमर्थे ब्रह्मणोऽनपत्येऽपि टिर्ल निपात्यं । ब्राह्मी औषधि । अनपत्य

इति किं ? प्रायणोऽपत्यं प्रायण ।

* औक्ष ॥ १७६ ॥ उक्ष्णोऽनपत्येऽपि टिखं निपात्यते । उक्ष्ण इदं—औक्ष पद । अनपत्य इति किं ? उक्ष्णोऽपत्य—औक्ष्ण ।

अन ॥ १७७ ॥ अन्नन्तस्यापि यदुक्त तन्न स्यात् । सुत्वनोऽपत्यं सौत्वनः । याज्वन । कर्मणो विकारः कार्मणः ।

येऽजौ ॥ १७८ ॥ अजार्थे येऽजौ यदुक्त तन्न स्यात् । सामनि साधु—सामन्यः । वेमन्यः । मूर्धनि भव मूर्धन्य । राज्ञोऽपत्यं—राजन्य । अजावीति किं ? राज्ञो भावः कर्म वा—राज्यं ।

लऽध्वन ॥ १७९ ॥ अध्वन ल परतः टिखं न भवति । अध्वानमलङ्गामी—अध्वनीनः ।

*ठाकेऽव्ययुनः ॥ १८० ॥ अथर्वन् युव झित्येतयोर्यदुक्तं तन्न स्यात् ठाकयो परत । अथर्वाणं वेत्त्यधीते वा आथर्वणिकः । यूनो भावो यौवनिका । ठाक इति किं ? अथर्वणोऽयं आथर्वं । युवा मयोभनमस्य—यौविक ।

दंडिहस्तिनोः फे ॥ १८१ ॥ एतयोः फले टिखं न भवति । दण्डिनोऽपत्य—दाण्डिमायनः । हास्तिनायन ।

वासिमिश्वासिनःफिढे ॥१८२॥ एतयोः फौ ढे च परे टिखं न भवति । वासिनोऽपत्यं—वासिनायनिः । जैह्वासिनेय ।

भ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयं ॥१८३॥ भ्राणहत्यादयो निपात्यन्ते । भ्रूणहन् धीवन् इत्येतयोस्तथापि सत्वं निपात्य । भ्रूणघ्नो भावः कर्म वा भ्रौणहत्य । धैवत्यं । सारव्यां भवः सारवं मसं । सरयूशब्दस्यायूकमाविपरे । इक्ष्वाकोरपत्यं ऐक्ष्वाक । अम्मुखं । मित्रयोर पत्यं—मैत्रेयः । दधि याः सं । हिरण्यस्य विकारः हिरण्मयं मिमगुई । मयटि मसं ।

+शीपन् शिरसोऽप्ये यि ॥१८४॥ शिरस शीपन् भवति य्मुक्ते यस्ये इति परे । शिरसि भव शीर्षण्यः स्वर । अप्य इति किं ? हास्तिशीर्ष्या ।

+वा फश ॥ १८५ ॥ शिरसः केशार्थे शीपन् वा भवाति यस्ये परत । शीर्षण्या शिरस्या केशा ।

+ शीर्षाऽचि ॥ १८६ ॥ शिरसश्शीर्षादेशो भवति अजादौ इति परत । हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । स्थूलशिरस इदं स्थौलशीर्षं । अचीति किं ? शिरस्कस्य । इतीति किं ? शिरसा नमामि शान्तिनाथं ।

इति जैनेन्द्रव्याकरणे शब्दार्णवचन्द्रिकायां
लघुवृत्तौ चतुर्थोध्यायस्य
चतुर्थः पादः ।
समाप्तश्चायमध्यायः ॥४॥

---

# अथ पचमोऽध्याय ।

* योरक ॥ १ ॥ योर्गुणनिमित्तभूतस्य अक इत्ययमादेशो भवति । नंदकः । वर्धक । कारक । भोगक ।

* फात्स्वपाप आयनयीनीयियः ॥ २ ॥ फादीनां निरचो गुणनिमित्तानामायनादयो भवंति । नडादिभ्यः फण—नाडायन । ढण् विनतेय—वैनतेय । कुलात् ख —कुलीन । समुद्रछ—समुद्रीय । क्षत्राद् घ—क्षत्रिय । गुणनिमित्तानामिति किं ? फक्कति । ढौकते । खनति । छिनत्ति । घूर्णते ।

ध्रौऽस्त ॥३॥ धकारस्यान्ता देशो भवति । मंथति । एधते । मन्थति । धीर्घ्यति । गोर्निमित्त

+मरसो वा ॥२१॥ अरसन्ताभ्यो वा स्वमोर्ल भवति । अतिमर , अतिजरस मास्त पश्य वा ।

इकः ह्रस्वं ॥ २२ ॥ इगत्यान्नपा वा स्वमो वा ह्रस्वं भवति हे वारे । हे वारि । हे त्रपो, हे त्रपु । प्रियतिमृ । प्रियत्रि ।

अतोऽम् ॥ २३ ॥ अकारान्तान्नपः स्वमोरम् भवति । दर्शनं । धन । वनं । कुण्डं । वनमन्वि पश्य वा ।

*पञ्चतोऽनेकतरस्यान्यादेर्दुक् ॥ २४ ॥ एकतरवर्जितस्य पञ्चकस्यान्यादेर्दुगागमो भवति स्वमो परतः । अन्यत् । अन्यतरत् । इतरत् । कतरत् । कतमत् तिष्ठति, पश्यति वा । पंच इति किं ? सर्वं, सिमं । अनेकतरस्येति किं ? एकतरं । नप इति किं ? अन्य । इतरेण सिद्धेऽन्यतरग्रहणं किं ? अन्यतम वनं ।

युष्मदस्मदो ङसोऽश् ॥ २५ ॥ आभ्यां ङसोऽश् भवति । तव । मम ।

ङेसुटोऽम् ॥२६॥ ताभ्यां ङेसुटोरम् भवति । तुभ्यं । मह्यं । त्वं । अहं । युवां । आवां । यूयं । वयं । त्वां । माम् । युवां । आवां ।

शसोऽन् ॥ २७॥ ताभ्यां शसोऽन् भवति । युष्मान् । अस्मान् ।

* भ्यसोऽभ्यम् ॥ २८ ॥ ताभ्यामपो भ्यसोऽभ्यम् भवति । युष्मभ्यं । अस्मभ्यं ।

* भ्योऽसोऽत् ॥२९॥ ताभ्यामपर्योत् कारात् भ्यसो ङसेश्चात् भवति । युष्मत् । अस्मत् । त्वत् । मत् ।

साम आकम् ॥३० ॥ ताभ्यामुत्तरस्य साम आकम् भवति । युष्माकं । अस्माकं ।

प्यास्विवाङसे वत्वा ॥ ३१ ॥ अस्मात्सम्भ तिले ङकसे च प्यो भवति । मङ्क्त्व । मङ्क्त्व । उच्चैःकस्व । नीचैःकस्व । तिवाङस इति किं ? मकृत्वा । परमकृत्वा ।

* सौस्येऽसुक्सुक् क्यचि ॥३२॥ गोः क्यचि परे असुक्सुकौ भवतः सौस्येऽर्थे । दध्यस्यति । दधिस्यति । मध्वस्यति । मधुस्यति । क्षीरस्यति । लवणस्यति । सौस्य इति किं ? दधीयति । मधूयति । क्षीरीयति । लवणीयति ।

यामेऽश्ववृषयो ॥३३॥ अश्ववृषयोर्यामेऽर्थेऽसुक्सुकौ स्तः क्यचि । अश्वस्यति वडवा । वृषस्यति गौः । याम इति किं ? अश्वीयति । वृषीयति देवदत्त ।

आम्याद् स्ने सुट् ॥३४॥ त्सरवर्णाद् आमि परे सुडागमो भवति । सर्वेषां । तेषां । येषां । केषां । सर्वासां । यासां । कासां ।

त्रेस्त्रय ॥ ३५ ॥ त्रेस्त्रयो भवत्यामि परे । त्रयाणां । परमत्रयाणां । त्रेरनुकामस्यादिह न भवति । अतित्रीणां । तिसृणामित्यत्र परेण बाध्यते ।

नम्याप्चतुरो नुट् ॥३६॥ एभ्यो नुडागमः भवत्यामि परतः । जिनानां । पञ्चानां । पञ्चानां । अष्टानामित्यत्रापि परत्वादीले "ष्णान्ता षट्" इत्यत्र ग्रहणस्योपदेशार्थत्वादिति इति नुट् । श्रीणां । कुमारीणां । वधूनां । मातॄणां । पूज्यानां । वारीणां । चतुर्णां ।

इदितोर्नुम् ॥ ३७ ॥ इदितो धोर्नुमागमो भवति । नन्दति । नन्दते । नन्दिता । नन्दितुं । नन्दितव्यमिति निन्दितवान् । इदित इति किं ? पचति । पच । धोरिति किं ? अमेसीत् । विन्दिकुण्ड्योरिति निर्देशास्त्वोत्पत्तेः प्रागेव नुम् । तेन-सरोर्हिक , इत्यः सिद्ध । कुण्डा । हुण्डा । कुण्डिरिति सनकारोच्चारणं ज्ञापकं-इदितो धोर्नुम् न भवति—भेदनं ।

शे मुचां ॥ ३८ ॥ मुचादीनां शे परे नुम् भवति । मुञ्चति । लुम्पति । विन्दति । लिम्पति ।

धनवतौ । धनवतः । पचन । पचतौ । पचंत । प्राङ् । प्राञ्चौ । प्राञ्चः । धम्वादेरिति किं ? उखा स्रत् । पर्णध्वत् । म्वादिप्रतिपद्यग्रहणम्बह । गोमत्यते—गोमान् । गोमतौ ।

युजिराऽसे ॥ ५२ ॥ युजिरो नुम् भवति असे च परत । युङ् । युञ्जा । युञ्जः । युञ्जं । युञ्जौ । असे इति किं ? अश्वयुक् । अश्वयुजौ । अश्वयुजः ।

नपोऽच ॥ ५३ ॥ नपोऽजन्तस्य धे नुम् भवति । वनानि । दधीनि । मधूनि । वारि ज्ञाणि । अच इति किं ? विमलदिवि । चतुर्गिरि । महानि ।

*झलो ॥ ५४ ॥ अचः परो यो झल् तदन्तस्य नपो धे नुम् भवति । सर्पींषि । धनूंषि । उदश्विति । काष्ठतक्षि ।

+ मान्वास्वः ॥ ५५ ॥ झलन्तस्य नपोऽन्त्योऽन्त्य झल्भावः प्राक् नुम् भवति बाह्मदोर्जि बाह्मदोर्जि ।

सुपीकोऽचि ॥ ५६ ॥ इगन्तस्य नप सु प्यचादौ परे नुम् भवति । वारिणी । मधुनी । वारि णा । मधुना । सुपीति किं ? तुम्बुर्वा विकारः-तौम्बुरव चूर्णं । इक इति किं ? वन । अचीति किं ? वारिभ्य ।

भादौ वोक्तपुंस्क पुंवत् ॥ ५७ ॥ इगंतं नयुक्तपुंस्क भादावजादौ पुंवत् वा स्यात् । शुचि । शुचुः । शुचि । साधु वृत्तं । ग्रामणि । शुचिने बलाय । ग्रामण्या । ग्रामणिना कुलेन । धारवो धारणे बलाय । कर्त्रा । कर्तृणा कुलेन । अतिरावा अतिरिणा । चित्रगवे । चित्रगुणे । भादाविति किं ? वारुणी । उक्तपुंस्कमिति किं ? त्रपुणे ।

सक्थ्यस्थिदध्यक्ष्णोऽनङ् ॥ ५८ ॥ सक्थ्यादीनामनङ् भवति भादावजादौ परत । सक्थ्ना । सक्थ्ने । अस्थ्ना । अस्थ्ने । दध्ना । दध्ने । अक्ष्णा । अक्ष्णे । अक्ष्णां । नपीति किं ?

दधि नाम कश्चित् पानशीलो वा दधिस्तेन दधिना

विदे धतुर्वसु ॥ ५९ ॥ विद् परस्य शतु र्वसुर्भवति । विद्वान् । विद्वांसौ । विद्वांसः ।

न भात् ॥ ६० ॥ भात्परस्य शतुर्नुम् न भवति । ददत् । ददतौ । ददतः । जाग्रत् । जाग्रतौ । जाग्रतः ।

वा नप ॥ ६१ ॥ नपस्तात्परस्य शतुर्वा नुम् भवति । ददति, ददति । जाग्रंति, जाग्रति कुलानि ।

श्रीम्बोरात् ॥ ६२ ॥ शीम्बोरवर्णान्तात् शतुर्वा नुम् भवति तुदती, तुदन्ती पाती पान्ती कुले तुदन्ती तुदती । पाती, पान्ती स्त्री । आदिति किं ? अदती । मानती स्त्री ।

शप्श्यनात् ॥ ६३ ॥ आभ्यां शतुर्नुम् भवति श्री ञु इत्येतयोः परत । नित्यार्थं वचनं । पचंती कुले पचंती कन्या दीव्यती कुले दीव्यंती कन्या ।

सावनडुह ॥ ६४ ॥ अनडुह सौ पर नुम् भवति । अनड्वान् ।

*द्यौः ॥ ६५ ॥ दिवः औत्वं निपात्यते सौ परे । द्यौरास्यते पुम्मन ।

पथिमथ्यृभुक्षामात् ॥ ६६ ॥ एषामात्त्वं भवति सौ परे । पन्थाः । मन्थाः । ऋभुक्षाः ।

पर्थे ॥ ६७ ॥ तेषामिकारस्यात्त्वं भवति घ परतः । पन्थानौ । पंथान । पन्थानं । पंथानौ । मन्थानौ । मन्थान । ऋभुक्षाणं । ऋभुक्षाण ।

थो न्थः ॥ ६८ ॥ तेषां थकारस्य न्थादेशो भवति घ परे । पन्थाः । मंथा ।

भस्य टे ख ॥ ६९ ॥ तेषां भसंज्ञकानां टे ख भवति । पथः पथ्य । पथा । पथ । मथः । मथा । ऋभुक्षः । ऋभुक्षा ।

पुंसोऽसुङ् ॥ ७० ॥ पुंसः असुङ् भवति घे परत । पुमान् । पुमांसौ पुमांसः पुमांसं पुमांसौ ।

+ आतो णित् ॥ ७१ ॥ ओतः परं घं णिद्भवति ।

गौ । गावौ । गावः । द्यौ । द्यावौ । द्यावः ।

वाऽस्मण्णश् ॥७२॥ अस्मदो मश्च वा मिद्भवति । चकार । चकर । विस्फालाविकल्प ।

* सखितोऽखौ ॥ ७३ ॥ सखित परं भं मि द्भवति अकौ परतः । सखायौ । सखायः । सखाय । सखायौ । तकार इति किं इमे सख्यौ । अकाविति किं ? हे सखे ।

* अन्सौ ॥ ७४ ॥ तस्य अन् भवति अकौ सौ परतः । सखा ।

मतुशनस्पुरुदंशोऽनेहसां ॥ ७५ ॥ ऋका रांतानां उशनस्प्रभृतीनां च अन् भवति मे अकौ सौ परत । कर्ता । दाता । पिता । माता । उशना । पुरुदंशा । अनेहा । अकाविति किं ? हे दातः । हे मातः । हे पुरुदंशः । हेऽनेह ।

+ तृच्वत् क्रोष्टु ॥ ७६ ॥ क्रोष्टु तृच्वत् भवति अकौ मे परतः । क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारं । क्रोष्टारौ । अकाविति किं ? हे क्रोष्टो । म इति किं ? क्रोष्टून् ।

+स्त्रियां ॥ ७७ ॥ क्रोष्टुः स्त्रियां तृच्वत् भवति । क्रोष्ट्री ।

+वाऽच्यापि ॥ ७८ ॥ क्रोष्टुः तृच्वद्वा भवति अचादावापि भादौ परतः । क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे। क्रोष्टवे क्रोष्टोः । क्रोष्टुः। क्रोष्ट्रोः। क्रोष्ट्वोः । क्रोष्ट्रि।क्रोष्टरि,क्रोष्टौ । अपीति किं ? क्रोष्टूनां । क्रोष्टुभिः । आपीति किं ? क्रोष्टून् ।

चतुरनडुहोर्वाः ॥ ७९ ॥ अनयोरुकारस्य वा भवति मे परत । चत्वारः । चत्वारि । अति चत्वा । अतिचत्वारौ । अतिचत्वार । अन ड्वान् । अनड्वाहौ । अनड्वाह । अनड्वाहं । अनड्वाहौ ।

वाऽकौ ॥ ८० ॥ तयोरुकारस्य वो भवति अकौ परतः । हे अतिचत्व । हेऽनड्वन् ।

+ पुंवेऽर्द्धे मातृ कपोऽश्च ॥८१॥ वसे मातृश ब्दात् परस्य कपो वा अङ् भवति कौ परतः पुंवेऽर्द्धे पुत्रमर्त्सनार्थो । हे गार्गीमात । पुत्र इति किं ? हगार्गी मातृके पुषि । अर्द्धे इति किं ? गार्गीमातृक ।

+वोशनोशनम् ॥८२॥ एतौ निपात्यौ कौ वा हे उशन । हेउशनन् । हे उशनः । उशनस इत्यस्य मर्त्स च निपात्यते ।

मृदामिद्वोः ॥८३॥ ऋकारांतस्य धोरिकारा देशो भवति । किरति । गिरति । विस्तीर्ण । गीर्णेते । धोरिति किं ? मातॄणां ।

उरु पोः ॥ ८४ ॥ उरु ऋत उर्भवति । कीर्तयति । कीर्तयतः । कीर्तयंति ।

दुशाद्युत् ॥८५॥ पवर्गादृकारांतात् परस्य धोर्ऋत उद्भवति । पूर्तः । मपुपूर्षति । बुभूर्षति । मुमूर्षति बुभूर्षति । मुनीम् ।

सावैम्मे ॥८६॥ मपरे सौ परे मोरैत् भवति । अनैषीत् । अहौषीत् । अकार्षीत् । अहार्षीत् । म इति किं ? अकरिष्ठ ।

झन्तस्यौऽत्तः ॥ ८७ ॥ अचिवर्णोऽर्कस्मारे फांतस्य च योरत ऐप् भवति मपरे सौ परतः । मात्रासीत् । अमात्सीत् । अवाक्षीत् । अपाठीत् । झन्तस्य इति किं ? मानिरथीत् । मानिरवीत् । अत इति किं ? न्यमीलीत् । न्यसोवीत् ।

इडामश्च ॥८८॥ इडन्तागामच ऐप् भवति मपरे सौ परतः । अमैसीत् । अर्चैसीत् । अरौसीत् । इडामिति किं ? मौरिवारीत् अम वीत् । अच इति किं ? अभाषीत् । अनिश्रोऽपि यथा स्यात् ।

नेटि ॥ ८९ ॥ इडादौ मसौ परे हलंतस्य योरच ऐप् भवति । अवेषीत् । अकोपीत् । अकर्षीत् ।

*ह्म्यन्तक्षणश्वसजाग्र्येदितां ॥ ९ ॥ हकार मकारयकारवकारांतानां क्षणादीनां च इडादौ

मसावैत स्यात् । अग्रहीत् । अरहीत् । अवमीत् । अस्यमीत् । अक्षणीत् । अश्वसीत् । अश्वयीत् । अरगीत् । अक्मीत् ।

वोर्णुव ॥ ९१ ॥ ऊर्णुभो मसौ वैऽभवति । प्रौर्णावीत् । प्रौर्णुवीत् ।

अतोऽनादयें ॥ ९२ ॥ अनादेरतो येयैम भवति इकादौ मसौ परतः । अकणीत् । अका णीत् । अरणीत् । अराणीत् । अषणीत् । अषाणीत् । अत इति किं असेवीत् । अनादेरिति किं ? मानिरटीत् । येरिति किं ? अरक्षीत् ।

*क्सादेरिट् ॥९३॥ क्सादेर्धातोगस्य इडा गमो भवति । पचिता । पचितुं । पचितव्यं । मचिता । मचितुं । मचितव्यं । पुषितव्यं । क्सा देरिति किं ? क्रम्य । क्रमीतम् । अगस्येति किं ? आस्ते । क्षेते ।

+ ग्रहाद् क्ते ॥९४॥ ग्रहादिभ्यः परस्य क्सादे क्तेरिड् भवति । निगृहीति । उदितिः । माषितिः । शीषितिः । मचितिः । लिखितिः । पठिति ।निकुचिति ग्रहादेरेव क्तेरिति नियमोऽस्य । तेन—विभूतिः । दीप्तिरित्यादि ।

*ग्रहोऽलिट्येकाचो दी ॥९५॥ ग्रहेरेकाचः परस्य इटो दीर्घवस्त्वलिटि परतः । ग्रहीष्यति । ग्रहीता । ग्रहीतुं । ग्रहीतव्यम् । अलिटीति किं ? जगृहिव । जगृहिमा एकाच इति किं ? जरीगर्हिता जरीगर्हितुं ।

* वृतो वाऽऽशिमसौ ॥ ९६ ॥ वृवृञ्भ्यां ऋकारान्तेभ्यश्च वा इटो दीर्घभवति अलिड्डाशिट् मसिषु परतः । वरिता । वरीता । प्रावरिता । प्रावरीता । तरिता । तरीता । भरिता । भरीता । निगरिता । निगरीता । आशिमसाविति किं ? वरिषीष्ट । प्रावरिषीष्ट । निगरिषीष्ट । प्रावरिष । ते रिष, तेरिम । प्रावरिष्टां प्रावरिष्टां । आस्तारिष्टां । न्यागारिष्टां । न्यागारिषु ।

सनीट् ॥९७॥ सनि परे वृत इट् वा भवति । बुवूर्षते । विवरिषते । विवरीषते । मा बुवूर्षति । माविवरिषति । माविवरीषति । तितीर्षति । ति तरीषति । तितरिषति । आतिस्तीर्षति । आति स्तरिषति । आतिस्तरीषति ।

लिङ्स्योर्दे ॥९८॥ वृञ्च परस्मोर्लिङ्स्योरि ड् वा भवति दे । लिङ—वृषीष्ट । वरिषीष्ट । आस्तीर्षीष्ट । आस्तरिषीष्ट । अवृत । अव रिष्ट । अवरीष्ट । मावृत । मावरिष्ट । मावरीष्ट । आस्तीर्ष्ट । आस्तरिष्ट । आस्तरीष्ट । द इति किं ? मावारिषु । मतारीत् ।

* स्फारतोऽम्ङ् ॥ ९९ ॥ स्फावस्कुवराढ कारास्लिङ्स्यार्दे वेड् भवति । स्मृषीष्ट । स्मरि षीष्ट । ध्वृषीष्ट । ध्वरिषीष्ट । अस्वृषातां । अस्मरि षातां । अध्वृषातां । अध्वरिषातां । असङ्करिति किं ? संस्कृषीष्ट । समस्कृत ।

*ऋदिवधूम ॥१००॥ ऋकारेद्भ्यो धूमभ्यो परस्य वकारादेर्वेड् भवति । रद्धा । रधिता । नष्टा । नशिता । नंक्ष्यति । नशिष्यति । उपगोढा । उपगूहिता । विषोढा । विषहिता । वाप्स्यति । वापिष्यति ।

निस्कुष ॥१०१॥ निस्पूर्वात् कुष इट् वा स्यात् । निष्कोषिता । निष्कोष्टा ।

इट् त॥१०२॥ निस्कुष तवते परे इड् भवति। निष्कुषित।निष्कुषितवान् ।

सीषसहलुभरषरिषः ॥१०३॥ एभ्यो वेड् भवति तकारादौ परतः । एष्टा । एषिता । एष्टुं । एषितुं।एष्टव्य।एषितव्य । सोढा।सहिता । लोब्धा। लोभिता । रोष्टा । रोषिता । रेष्टा । रेषिता । तीति किं ? सहिष्यते ।

सनीवतर्द्धऋस्मर्दमुसभियृधुभरज्ञपि

ग्रार्थे ॥ ११७ ॥ नित्यानिट्तास्य अकार वग्र्याद्र्यंतेभ्य सृजदृशिभ्यां च अ पञ्च भवति स्कादीन्निदाय । पक्ता । पपक्थ । पेचिथ । शक्ता । शशक्थ । शेकिथ। याता । ययाथ । ययिथ । नेता । निनेथ । निनयिथ । स्रष्टा । ससष्ट । ससर्जिथ । द्रष्टा । ददष्ट । ददर्शिथ । अत्वद्वत् सुबद्ध इति किं ? भेत्ता । बिभेदिथ । नित्यम् इत्य किं ? अक्ता । अञ्जिता । आनंजिथ । अनिट् इत्य किं ? कविता । चुकविथ । तासुग्रहण किं ? अवसिथ । अ इति किं ? पेचिथ । पचिम । अस्कृद्भ्यार्थरिति किं ? संस्कर्त्ता । सस्कारिथ । अत्ता । आदिथ । व्याता । विव्यायिथ । आत्ता । आरिथ ।

ऋत ॥ ११८ ॥ ऋकारांतान्नित्यानिट् तासस्थे नेट् भवति । कर्त्ता । चकर्थ । हर्त्ता । जहर्थ । स्मर्त्ता । सस्मर्थ ।

*गमस्त्वार्दे ॥ ११९ ॥ गमस्तुभ्यां बकादे रगम्यदे सति नेट् भवति।सगम्यत। सञ्जिगसते। अधिजिगांसतेऽप्रस्तोष्यतेप्रस्तोष्यमाण प्रास्तोष्ट।

क्रमः ॥ १२० ॥ क्रमे परस्य नेट् भवति द । प्रक्रस्यत । प्राक्रस्त । प्रचिक्रंसते । द इति किं ? क्रमिता ।

*नु ॥ १२१ ॥ दे विषये क्रमेः परस्य तुर्नेट् भवति । प्रक्रन्ता । उपक्रंता ।

घषि ॥ १२२ ॥ घोषघादौ परे नेट् भवति । ईश्वरः। ईशाम । भस्म । दद्ध । मुद्ग्रः । गर्गः । बसीति किं ? ईशिता ।

*स्तौविदघोऽथिप्र्यभिद्वीदीरुपट्फोमृत्स ॥ १२३ ॥ स्तकारौकारेभ्योऽर्थतस्मश्च एका च्यम्यो विहितस्य अमर्देनेट् भवति पक्वादीन्निदाय। गता । शक्ता । भेत्ता । बंता । चसा । माता । दाता । भेता । स्तोसासाकृता । पता।विर्जन किं ? पतिता । श्रमिता । भ्रमिता । शमिताडमिता।

रयिता । क्षयिता । क्ष्मयिता । स्नविता । नविता । भविता । भविता । कविता । वरिता । वरीता । आवरिता । प्रावरीता । तरिता । तरीतापरिगा । वरीता । भाग्रभिपीद्याण्काच इति किं ? माणविता । बिभेदिता । विच्छेदिता । जागरिता ।

*क्तिषत्रोणादः ॥१२४॥ एषां नेट् भवति। शंतिः । तति । पोत्रं । शस्त्रं । असुः । मत्स । अप्सर । हस्तः । वर्तिका । पर्णं । कुक्षिः । इषु । शर्करा । क्षम ।

*किस्यूणुमूभ्रयुक ॥ १२५ ॥ एभ्य किति नेट् भवति । प्राणुतः । मोणुतवान् । भित । भितवान् । श्रित्वा । श्रिति । युतः । युतवान् । युत्वा । युति । स्तुः । स्तुतवान् । स्तुता । रुति । भावृत । मावृतवान् । किंतीति किं ? भविता । ऊर्णोतारेति किं ? श्रयित्वा । एकाच इति किं ? जागरित । जागरितवान् ।

सनि ग्रहगुहश्च ॥ १२६ ॥ ग्रहगुहाभ्या उगंतेभ्यश्चैकाच सनि नट् भवति । जिघृक्षति । जुघुक्षति । रुरूषति । लुलूषति ।

वसुपुस्तुद्रुसुभार्लिटि॥१२७॥एभ्यः लिटि नेट् भवति । बभूवाबभूम । समृव । समृम । वव्रहे । वव्रमहे । ववृव । ववृम । दुद्रुव । दुद्रुमातुष्टोय।शुश्रुव।शुश्रुम।तुष्टोमातुष्टुव। सुसुम । सुसाव । शुश्रुव । शुश्रम । शुश्राव । सिद्ध म स्यारंभो नियमार्थ । प्रायत एव क्र्यानिटा मान्योदविथ । ददिम । बिभिदिव । बिभिदिम ।

*कृभाऽस्कृ ॥ १२८ ॥ कृञ अस्कृटा लिटि नेट् भवति । चकृव । चकृम । अस्कृरिति किं ? सचस्करिव । संचस्करिम ।

*डीयश्वीदिद्वेडोऽपतस्ते ॥ १२९ ॥ डीय श्विभ्यां इरिद्भ्यो विभाषइभ्यश्च पति स्वरूपता तर्मेन्रे परे नेट् भवति । डीनाः । डीनवान् । शूनः ।

इनश्चेट् भवति स्ये परे । करिष्यति । अकरिष्यत् करिष्यमाण । हरिष्यति । स्वरिष्यति । हनिष्यति ।

*साबन्मे ॥१४५॥ अत्र सौ परे इट् भवति आजीत । आजिष्टां । आजिषु ।

स्तुधूञ्सोर्मे ॥१४६॥ पम्यो मसाविट् भवति । अस्तावीन् कुंपुनार्थ । अधावीत् । असावीत् । म इति किं ? अस्तोष्ट ।

यमरमनमातां सक् च ॥१४७॥ एषां मसाविट् सक्चागम । अयसीत् । अयसिष्टां । अयसिषु । अरंसीत् । अरंसिष्टां । अरंसिषुः । अनंसीत् । अनंसिष्टां । अयासीत् । अयासिष्टां । अयासीत् । अवासीत् ।

स्मिङ्पूङ्रञ्ज्वशः सनि ॥१४८॥ एतेभ्यः सनीड् भवति । सिस्मयिषते । पिपविषते । अरिरिषति । आञिजिषति । अशिशिषते ।

*किरश्च ॥ १४९ ॥ किरादिभ्यः सनीट् भवति । उचिकरिषति । निजिगरिषति । दिदरिषते । दिधरिषते । पिपृच्छिषति । भरसङ्गात् गुणादिपन्ताऽगमोऽन्यथाभावत् ।

रुदस्वपो ग ॥१५०॥ रुदादिभ्यः गे इट् भवति । रोदिति । रुदितः । स्वपिति । स्वपितः । प्राणिति । प्राणितः । श्वसिति । श्वसित । जक्षिति । जक्षितः ॥ ग इति किं ? स्वप्ता । स्वप्तुं । स्वप्तव्य । अगादेरिति किं ? रुदति । स्वपति ।

*ईड स्थे ॥१५१॥ ईडःसकारादौ ध्वे च परे इट् भवति । ईडिषे । ईडिध्वे । ईडिष्व । ईडिध्वं ।

ईशः ॥१५२ ॥ ईशः सकारे ध्वे च परे इट् भवति । ईशिषे । ईशिध्वे अनेदयेति केचित् व्यतिवशिषे व्यतिजक्षिध्वे ।

सिज्नेऽनन्त्यसस्य ॥१५३॥ सिजः अनन्त्यस्य सकारस्य र्स स्यात् गे । कुर्यात् चिनुयात् । चिनुयातां चिनुयुः । कुर्वीत । चिन्वीत । अनन्त्य इति किं ? कुर्यां । कुर्युः । गे इति किं ? क्रियासुः । कुर्याष्ट ।

अतो यस्य ॥१५४॥ अतउत्तरस्य या इत्यस्य इय भवति । पचेतानवेत । दीव्यत् । तकारः किं ? यामात् ।

*आतोऽस्य ॥१५५॥ अत परस्य ङित्संज्ञितस्यात इय भवति । पचेते । पचेथे । पचेतां । पचेथां । अप इति किं ? पचावहे । पचामहे ॥

आने मुक् ॥१५६॥ गोरकारान्तस्य मुगागमो भवति आने परतः । यजमानः । पचमानः । वर्तमान ।

ईदासः ॥१५७॥ आसः परस्यानस्य ईद्भवति । आसीनोऽधीते । आसीनो भुंक्ते ।

*सुप्याष्टन ॥१५८॥ अष्टनस्तदन्तस्य च गोराकारादेशो भवति सुपि परे । अष्टाभिः । अष्टाभ्यः । अष्टासु । प्रियाष्टाः । प्रियाष्टा । प्रियाष्टौ । प्रियाष्टानौ । प्रियाष्टौ । प्रियाष्टानः । प्रियाष्टाम् । प्रियाष्टानं । प्रियाष्टौ । प्रियाष्टानौ । प्रियाष्टौ । प्रियाष्टनः । प्रियाष्टा । प्रियाष्टना । प्रियाष्टाभ्यां । प्रियाष्टाभिः । प्रियाष्टे । प्रियाष्टने । प्रियाष्टः । प्रियाष्टनः । प्रियाष्टनो । प्रियाष्टोः । सुपीति किं ? अष्टकर्मघाती जिनः ।

रायः स्मि ॥१५९॥ रै इत्यस्यात्व भवति सकारभकारादौ सुपि परतः । रा । राभ्यां । रासु । प्रियरि । प्रियराभ्यां । प्रियरासु ।

*युष्मदस्मदो ॥१६०॥ एतयोरात्वं भवति सकारभकारादौ सुपि परत । युष्माभिः । अस्माभि । युष्मासु । अस्मासु ।

*आमिपि ॥१६१॥ युष्मदस्मदोरात्वं भवति आकारे इपि च परत । युवां । आवां । त्वां । मामित्यादि ।

य ॥१६२॥ तयोर्यो भवति सुपि परत । त्वया । मया । त्वयि । मयि । युवयो । आवयो

समादेशे ॥१६३॥ आदेशे सुपि तयो
र्मं भवति। त्व। अहं। त्वत्। मत्। युष्मत्। अस्मत्।
+ मो वा ॥१६४॥ मकारांतयोस्तयो र्म भवति
वा आदसमुते सुपि । युष्मासाकशाणेम्य
युष्मभ्यं । युवभ्यं । अस्मभ्यं । असभ्यं ।
मावयेर्मे विषयस्ते परत्वात् मर्भवति । युष्मत् ।
युवत् । अस्मत् । असत् । युष्माकं । युवाकं ।
अस्माकं । असाकं ॥

मावधे ॥१६५॥ तयोर्मकाराबधे सपात
स्यादेशा भवति इत्येषोऽधिकारो वेदितव्य । तत्रै
वोदाहरिष्याम ।

युवावौ द्वौ ॥१६६॥ तयोर्मावधेर्युवावादेशौ
स्तः द्वौ परत । युवां । आवां । युवाभ्यां ।
आवाभ्यां ।

*त्वमौ त्वयौ चैके॥१६७॥ एकार्थे वर्तमान
योर्युष्मदस्मदोर्मावधेस्त्वमावादेशौ स्त सुपि
त्वे यौ च एकत्वे । त्वयि । मयि । त्वदीय ।
मदीय । त्वत्तर । मत्तर । त्वत्कल्प । मत्कल्प
त्वत्पुत्र । मत्पुत्र ।

त्वाहौ सौ ॥१६८॥ युष्मदस्मदो त्वाहौ
भवत सौ परे । त्वं । अहं ।

यूयवयौ जसि ॥ १६९ ॥ तयोर्यूयवयौ
भवत जसि परे । यूयं वयं ।

तुभ्यमह्यौ ङयि ॥१७०॥ तयोस्तुभ्यमह्यौ स्तः
ङयि परे । तुभ्यं । मह्यं ।

तवममौ ङसि ॥ १७१ ॥ तयोस्तवममावादेशौ
स्त ङसि परे । तव स्वं । मम स्वं ।

त्रिचतुरः स्त्रियां तिसृचतसृ ॥ १७२ ॥
त्रिचतुरो स्त्रियां वर्तमानयोः तिसृचतसृ इत्येता
वादेशौ भवत सुपि । तिसृभि । तिसृभ्य । तिसृषु
चतसृभि । चतसृभ्यः । चतसृषु ।

रोऽचि ॥ १७३ ॥ तिसृचतसोः ऋकार
स्य रेफो भवत्यचि परत । तिस्रः संति । तिस्रः
पश्य । चतस्रो यांति । चतस्रो मम ।

+घाऽस्येर्दस्यौङि ॥ १७४ ॥ तिसृचतु-
सोरसंख्यावाचिनोः अकारस्य रपा भवति
वा ङा—औङि च परत । प्रियतिसृ । प्रिय
तिसरि । प्रियचतसि । प्रियचतसरि । प्रिय
तिस्रौ । प्रियतिसरौ । प्रियचतस्रौ । प्रियचत
सरौ । प्रियतिस्रः । प्रियतिसरः । प्रियचतस्र ।
प्रियचतसर' । प्रियतिसृं । प्रियतिसरं । प्रिय
चतसृं । प्रियचतसरं ।

*जराया ङस्॥१७५॥ सुप्यचादौ परे जराया
वा ङस् भवतिजरे,जरसै।जरा जरस ।जरां,जरसं ।
जरे जरसौ । जरा , जरस ।जरया । जरसा ।

त्यदादेर ॥ १७६ ॥ त्यदादीनामर्त्व
भवति सुपि परतः।स्यः।स्यौ । स्ये । सः।तौ।तेऽइ।

किमः कः ॥ १७७ ॥ किमः को भवति
सुपि परे। कः। कौ । के ।

*कुतसयोः ॥१७८॥ किम कुर्भवति तका
रादावाचि च परत । कुतः । क ।

*तोः सोऽनंते सौ ॥ १७९ ॥ त्यदादेः तव
र्गस्यानंते वर्तमानस्य सो भवति सौ परे । स्य ।
सः । एषः । अनंत इति किं ? य' । सः ।

असौ ॥ १८० ॥ असाविल्ययः औत्वं
सोश्च सं निपात्यत । असौ ।

+घाऽमुकः॥१८१॥ अमुक इत्यसो ऽकाऽका
रस्यात्वं वा निपात्यत सौ परे। अमुकः।असकौ ।

इदमो मः॥ १८२ ॥ इदमः मकारो भवति
सौ परे । इयं । अयं ।

दः ॥ १८३ ॥ इदमो दकारस्य मो भवति
सुपि । इमौ । इमाइमाः। इमाः । इम।इमानि ।

य सौ ॥ १८४ ॥ इदमो दकारस्य यो
भवति सो परे । इयं ।

पुसीदाय् ॥ १८५ ॥ इदमः इदरूपस्या य् भवति पुंसि सौ । अयम् ।

*टौस्यनोऽकः ॥ १८६ ॥ इदमः ककार हीनस्येदः अनादेशो भवति टौसि परे । अनेन । अनया । अनयोः । अक इति किम् इमकेन । इमकया ।

हलि लं ॥ १८७ ॥ इदमोऽककारस्येदः लं भवति हलादौ सुपि परतः । आभ्याम् । एभिः । एभ्यः । आभिः । एषाम् । आसाम् । एषु । आसु । अक इति किम् इमकाभ्याम् । इमकेभ्यः ।

*अन्वादेशेऽश् ॥ १८८ ॥ इदमोऽश् भवति अन्वादेशे कथितानुकथने हलादौ सुपि परे । इमकाभ्यां छात्राभ्यां रात्रिरुषिता । अथो आभ्यां दिवा च कृता । इमकस्य छात्रस्य कुल-मशोभनं अथोऽस्य शीलमपि । इमकस्य राज्ञो जनपदो दुर्विनीतः । अथाऽस्य भृत्याश्च मत्ताः ॥

*टौसिष्येतदश्चैनत् ॥ १८९ ॥ इदमः एत दश्च एनद्भवति अन्वादेशे टा—आम्—इप् इत्येतेषु परतः । अनेन छात्रेण रात्रिरधीता—अथो एनेनाहरप्यधीतं । एतेन छात्रेण रात्रिरधीता । अथो एनेनाहरपि । अनयोः छात्रयोः शोभनं शीलं । अथो एनयोः रूपमपि । एतयोः छात्रयोः शोभनं शीलं अथो एनयोरूपमपि । इमं छात्र जैनेन्द्रमध्यापय अथो एनं छन्दोऽपि । एतं छात्रं काव्यमध्यापय—अथो एनं तर्कमपि । सुशीलाविमौ । अथो एनौ जगत् मानयति । दुष्टा एतौ । अथो एनौ लोको निंदति । धार्मिका इमे देवा अस्मैनान् नमस्यंति । विनीता एते अथो एनान् पूजयति । इद सर भ्रमरा सेवंते । अथो एनानुद्दिशाथ । एतान् कुकर्मिणः सेवंते अथो एनान्मित्राणि च । अन्वादेश इति किं ? देवदत्त मध्यापय इमं च छात्रं पश्य ।

इति जैनेन्द्रव्याकरणे शब्दार्णवचन्द्रिकायां वृत्तौ पंचमस्याध्यायस्य प्रथम पादः ।

# द्वितीय पादः ।

मृजेरैप् ॥ १ ॥ मृजेरैप् भवति । मार्ष्टि । मार्ष्टां । मार्ष्टु । मार्ष्टव्यम् । मार्जिता । मार्जितुं । मार्जितव्यम् ।

क्ङित्यचि वा ॥ २ ॥ क्ङित्यजादौ मृजे रैब्वा भवति । संमृजंति । संमार्जंति । परिम मृजतुः । परिममार्जतुः । क्ङितीति किं मार्जन । अचीति किं ? मृष्ट । मृष्टवान् ।

ञ्णित्यपः ॥ ३ ॥ अचस्य ञ्णित्यैप् भवति । प्राकार । अध्याय । गौ । गावौ । गावः । सखायौ । सखायः ।

उपोऽतः ॥ ४ ॥ उपोऽकारस्यैब्भवति ञ्णिति परतः । पपाच । पाचक । पाठकः । पाकः । पाठः । अत इति किं ? भवक ।

तद्धितस्यादेः ॥ ५ ॥ अचामादेरच ऐब्भवति । इति ञ्णिति परे । त्रैपुष्टिः । औत्स । भार्गः । जैनः ।

दविकादिशिंशपादीर्घसत्रश्वपसामा ॥ ६ ॥ देविकादीनामादेरच ऐब्भवत्याकार । दैविकायां भवं-दाविकमुदकं । शिंशपायाः विकारः शांशप भस्म । दीर्घसत्रे भव दार्घसत्रं पुण्यं । श्वेयो प्रतिकृत्य श्वाहो मेघः आयस स्याद्वाद ।

×वहीनरस्यैः ॥७॥ वहीनरस्यादेरच ऐकारो भवति । वहीनरस्यापत्यं वैहीनरिः ।

केकयमित्रयुप्रलयानां यादेरियू ॥ ८ ॥ एषां यकारादेरियू भवति इति ञ्णिति परतः । केकयस्यापत्यं कैकेयः । मित्रयोर्भावः मैत्रेयिका श्लाघते । प्रलयादागतं प्रालेयमुदकं ।

पदे य्व पेयौच् ॥९॥ पदे परतोऽचावेरचः स्थाने इकयोर्यकारवकारयो एयौच् इत्येता वादेशौ भवतः इति ञ्णिति परतः । वैयाकरणः ।

नाम । नामकः । गामुक । गामकः । आयामः । आयामकः ।

यन्तवरया ॥ ३९ ॥ यनितयमोः कम्प्या पञ्च स्यात् । यनक । यन्तः । यमनि । यमः । यवक । यवयि ।

+यम्युपोद्रम्यम' ॥ ४० ॥ उपोद्धर्था रमि यमो णमि पेम भवति । उपरमः । उद्यमः ।

विश्रमा वा ॥ ४१ ॥ विपूर्वस्य श्रमेणमि वेम्न स्यात् । विश्रामः । विश्रमः ।

ह्रीब्लीरीक्नूय्यर्तिस्माय्यातां पुग् णावैए ॥ ४२ ॥ ह्न्यादीनामाकारान्तानां च णौ परे पुग्मवस्यैप् च । ह्रपयति । ब्लेपयति । रेपयति । क्नापयति । अर्पयति । क्ष्मापयति । दापयति । स्थापयति । नापयति । मापयति ।

शाछासाह्वाव्यावेर्षा युक् ॥ ४३ ॥ छादीनां णौ युग् भवति । निशाययति । अवच्छाययति । अवसाययति । आह्वाययीत्याह्वयति । वाययति । पाययति ।

*धूञ्प्रीञोर्नुक् ॥ ४४ ॥ धूञ्प्रीञोर्णौ नुग् भवति । विधूनयति । प्रीणयति ।

*कक्रादामप्क ॥ ४५ ॥ कक्रादीनां णावगागमो भवति । कथयति । वरयति । गणयति । रहयति । मदयति । कम्पयति । महयति । स्पृहयति । गृहयते । पतयति । गवेषयति ।

वा विधूनन ञुक् ॥ ४६ ॥ वातर्विधूननमर्थे णौ जुग् भवति । पक्षव्यापवाजयति । विधूनन इति किं ? केशानावापयति ।

पातेर्लुक् ॥ ४७ ॥ पातेर्णौ लुग् भवति । पालयति शीलमात्मा । पायवति पय जैन ।

*मा वा स्नेहद्रव ॥४८॥ ला इत्येतस्य स्नेहद्रवमे णौ जुग्वा भवति । विलापयति । विलालयति घृतं । स्नेहद्रवहति किं ? अयो विलापयति ॥

स्यो नुक् ॥ ४९ ॥ ली इत्येतस्य णौ स्नेहद्रव नुग्वा स्यात् । विलीनयति । विलाययति आज्यं ।

रुहः प ॥ ५० ॥ रुहेर्णौ वा पो भवति । आरोपयति, आरोहयति स्वर्गे जिनधर्मः ।

स्फायो वः ॥५१॥ स्फायो णौ परे वादेशो भवति । स्फावयति । स्फावयत । स्फावयति ।

शदोऽगतौ तः ॥ ५२ ॥ शदेस्तो भवति अगत्यर्थे णौ परे । पुष्पाणि शातयति । फलानि शातयति । अगताविति किं ? गां शादयति पक्षपा ।

स्यस्थऽसित्कपापीद्त्वोऽसुपाऽयदादे ॥५३॥ स्यस्थे विहितेऽसित्ककारे आप्परे पूर्वस्य अदादिवर्जितस्य इकारादेशो भवति न चेत्स आप्सुप्परो विहित । जटिका । मुण्डिका । कारिका । स्थ इति किं ? शका । तका । स्थ इति किं ? पाचिका । कारिका । अत्रापि यथा स्यात् । असिदिति किम् ? नीचका । नंदका । मनुर्कम्पिता । देवका । कृति किं ? नदना । रमणा । आपीति किं ? पाचक । अत इति किम् ? गोका । नौका । असुप इति किं ? बहुपरिव्राजका मथुरा । अयदादेरिति किं ? यका । सका । क्षिपका ।

*स्तया ॥ ५४ ॥ स्त्यत्स्यवर्णान्तस्य आपीत्स्यात् । दाक्षिणात्यिका । इहत्यिका ।

×नरिकामामिका ॥ ५५ ॥ नरकमामक नारिका निपात्यते । नरान् कायति नरिका । मम इयं मामिका ।

+ तारकाष्टकावर्णका ज्योति क्रियातोतवे ॥ ५६ ॥ तारकादया निपात्यंते ज्योतिरादिष्वर्थेषु । तारका नक्षत्रं । अष्टका पितृदेविका क्रिया । वर्णका वस्त्रविशेषः । तारिका । अन्यो परिमाणमस्या अष्टिका । वर्णिकाऽन्यत्र ।

वाऽन्वोऽपार्यकात् ॥ ५७ ॥अपोयकारक कराभ्यां परस्यातःस्थाने इतो योऽकारस्तस्येत्वम्भवति वा । इममहति इभ्या । कुत्सिता इभ्या इभ्यिका । इभ्यका । धर्मिका । धर्म्यका । चटकिका । चटकका । मूषिकिका । मूषिकका ।मात इति किं ? सांकाश्ये भवा सांकाश्यिका। अपोरिति किं ? सुन यिका । सुपाकिका ।

*द्वयेषसूतपुत्रवृन्दारकस्य ॥ ५८ ॥ एषा मत इत्वं स्यात् । द्विके । द्वके । एषिका । एषका। सूतिका । सूतका । पुत्रिका । पुत्रका । वृन्दा रिका । वृन्दारका ।

+वर्तिका शौ ॥५९॥ शकुनौ इत्वं निपात्यते। वर्तिका, वर्तका पक्षी । वर्तिकान्यत्र ।

*भस्त्राजाद्वास्वानां ॥ ६० ॥ एषामतो वा इत्वं स्यात । बहवः भस्त्रा भस्त्राः-बहुभस्त्रिका,ब-हुभस्त्रका । अजिका, अजका । द्विका, द्वका । स्विका, स्वका ।

आशानुक्तपुंस्कात् ॥ ६१॥ अनुक्तपुंस्का-त्परस्यात आत्वमित्वं च वा स्यात् । खट्वाका, खट्विका, खट्वका । वीणाका, वीणिका वीणका ।

इक ठ ॥६२॥ठस्य इक इत्ययमादेशो भवति। आक्षिकः । आपूपिकः । माथिकः ।

*दोसिसुसुगन्नन्तवकस्मात्तः कः ॥ ६३ ॥ दोसुसन्तात् इसुसुगन्तात् तान्तवकस्मान्नियताय कारान्ताच ठस्य को भवति । दोर्भ्यां तरति दौष्कः। सर्पिः पण्यमस्य-सार्पिष्कः । धानुष्कः । साबर जैतुकः । मातृकः । औदश्वित्कः । तान्तवक स्मादिति किं ? सम्भवेन साम्भविकं । आकस्मिकं।

यजाः कुर्पिण्ये सजनिटः ॥ ६४ ॥ ते च निटो योश्चकारजकारयोः कुत्वं स्यात् घिति ण्ये च परतः । पाकः । सेकः । त्यागः । योगः । पाक्यं । योग्यं । ते अनिट इति किं ? संकाचः । कूजः । सर्जः । परिमार्जः । शोच्यं ।

+निदाघावदाघार्घवार्घ्य सौ ॥ ६५ ॥ निदाघादयो निपात्यन्ते सौ। निदाघः। अवदाघः। अर्घः । वार्घः। साविति किं ? निदाहः । अव दाहः । अर्हः । वार्ह्यं ।

न्यङ्कादीनां ॥ ६६ ॥ एषां कुत्वं निपात्यते । न्यञ्चतीति न्यङ्कुः । मेघः । पिङ्गाकः । शोकः । तर्कः । वकः । आकृतिगणोऽयं ॥

हो घ्नो ञ्णिनासि ॥६७॥ हन्तेर्हकारस्य कु भवति ञ्णिति नकारे च परे । घातः । घात-यति । साधुघाती । घातं घातं । घ्नन्ति । घ्नन्तु । अघ्नन् । ञ्णिन्नीति किं ? हतः । हतवान् ।

घात् ॥ ६८ ॥घात्परस्य हन्तेर्हस्य कुर्भवति। अघाम । जघन्यत । जिघांसति ।

हेरवाचि ॥ ६९ ॥ हिनोतेरभ्यासात्परस्य कुर्भ वत्यचि परतः । जिघाय । जेघीयते । जिघी षति । अचीति किं ? प्राजीहयत् ॥

सञ्लिटोर्जे ॥ ७० ॥ जयतेरभ्यासात्परस्य जे कुर्भवति सनि लिटि च परतः । जिगीषति । जिगाय ।

वा चेः ॥ ७१ ॥ अभ्यासात्परस्य चिनोतेर्वा कुर्भ वति सन्लिटोः परतः । चिकीषति । चिचीषति । चिकाय । चिचाय धर्मं ।

न चचेर्गतौ ॥ ७२ ॥ वञ्चेर्गत्यर्थे कुत्वं न स्यात् वञ्चि । वञ्चं वञ्चयति वणिजः । गताविति किं ? वङ्कं काष्ठं ।

*प्रयाजादयो यज्ञाङ्गे ॥ ७३ ॥ एते निपात्यन्ते यज्ञाङ्गे । प्रयाजः । अनुयाजः । उपयाजः । यज्ञाङ्गे इत्येव । प्रयागः ।

ण्य आवश्यके ॥ ७४ ॥ आवश्यकेऽर्थे ण्ये परतः कुत्वं न स्यात् । अवश्यसेच्यं । अवश्यपाच्यं । आवश्यक इति किं ? सेक्यं ।

यजयाचरुचप्रवचर्चा ॥ ७५ ॥

बोधामृतमद् ।

क्यचि ॥१५६॥ अवर्णान्तस्य ईर्भवति क्यचि परत । पुत्रीयति । मालीयति ।

सुपृङ्गर्द्धेऽश्वनायोदन्यधनाया॥१५७॥एव्व मेषु अशनायेय अजठा निपात्यते । अशनायति । उदन्यति । धनायतिमश्वनीयति । उदकीयति । धनायति अन्यत्र ।

दोसोमास्थां क्तितीत् ॥१५८॥ एषां तका-रादौ कित्ति परे इत्व स्यात् । निर्दित । निर्दितवान् । दित्वा । दिति । अवसित । अवसितवान् । सित्वा । सितिः । मितः।मितवान् । मित्वा । मिति । स्थित । स्थितवान् । स्थित्वा । स्थिति । क्तितीति किं ? दीयते । दाता ।

•शा मत ॥ १५९ ॥ श्यतेः कित्ति मतविषये इट् भवति । शमितं मठं । शमितो भवी । मत इति किं ? निशात ।

•छम वा ॥ १६ ॥ छयते श्यतेश्च इर्वा स्यात् कित्ति पर । अपच्छित । अपच्छितवान् । अपच्छात । अपच्छातवान् । निशित । निशितवान् । निशात । निशातवान् ।

धाञो हि ॥१६१॥ धाञ हिर्भवति कित्ति परे । हित । हितवान् । हित्वा । हिति ।

हाक क्त्वा॥१६२॥हाक हिर्भवति क्त्वाख्ये पर । हित्वा राज्यं गत । क्त्वीति किं?हीन । हीनवान् ।

दो दद्धौ ॥१६३॥ दा इत्येतस्य घुसंज्ञकस्य दद्भवति कित्ति परे । दत्त । दत्तवान् । दत्त्वा । दत्ति । भारिति किं?दातं बर्हि । अवदातं मुखं ।

अच्उपसर्गात्तः ॥१६४॥ अच्च मेरपसर्गात् परस्य दो मात्त्वकारादेशो भवति कित्ति परेऽन्तस्य वर्णं देशाश्च-प्रत्त । प्रत्तः। प्रत्तवान् । परिदायेन निर्दत्तं परीत्तिमं । अच्उपसर्गादिति किं?दापिदत्तं । अचः इति किं ? संदत्त ।

•मादाम्ना वाऽमे क्ते॥१६५॥मारस्य दामः वा तो भवत्यासमे क्तये पर । मत्त । मदत्त । मादिति किं ? परीत्त ।

+निविस्वन्ववात्॥१६६॥ एभ्यो दाम -भादे मे क्ते तो वा स्यात् । नीत । निदत्तं । वीत । विदत्तं । सूत । सुदत्त । स्वनूत्तं । अनुदत्तं । अवत्तं । अवदत्त ।

स्पऽपः ॥१६७॥ भकारादौ परे अपस्तो भवति । अद्भिर् अद्भ्यः । भीति किं ? अप्सु ।

स्यगे सः ॥१६८॥ सकारादौ अगे धोरस्य परस्य सकारस्य तादेशो भवति । वत्स्यति । अवत्स्यत् । विवत्सति । सीति किं?वसिष्यते । अग इति किं ? आस्से । वस्से ।

तासस्त्योर्लं ॥१६९॥तासेरस्तेश्च सका-रस्य सकारादौ परतः लः स्यात् । कर्तासि । कर्तासे । व्यतिसे ।

रि ॥१७०॥ तयोः सकारस्य हं भवति रे-फादौ । कर्तारौ । कर्तारः । रेफादौ अस्य सकारो नास्ति भूमावस्य विद्यमानत्वात् ।

एति ह ॥१७१॥ तयोः सकारस्य हो भवति एकारे परतः । कर्ताहे । व्यतिहे ।

•दीधीवेव्योरिवे ॥१७२॥ दीधी वेवी इत्येत योरिवर्णयकारयोः परत लः स्यात् । दीधीड दीप्तिदेवनयो । आदीध्यिता । आदीधीत । आदीधी भवति । साधुदीधी । दीधिति । यकारे—आदीध्यते । आदीध्य गत । आदीध्यां । वेवीङ् वेतना तुल्ये । व्यवेविता । आवेवीत । आवेवयति । साधुवेवी । वेविति । आवेव्यते । आवेव्य गत आवेव्यं।इवर्णयकारे इति किं?आदीध्यनं।आवेव्यनं।

+योऽनि ॥१७३॥ तयोर्यकारस्य खो भवत्यनि परत । आदीध्ये । आदीध्यावहे । आदीध्यामहे ।

आदीध्याथां । आदीध्यातां । आदीध्वक । वेव्ये । वेव्यावहे । वेव्यामहे । वेव्याथां । वेव्यातां । वेव्यक ।

स्सनि मीमाघुरभलभशकपतपदोऽच इस् १७४ एषामच इस् भवति सनि सकारादौ परत । मित्सति अर्थं । प्रमित्सति पशु । मित्सते । प्रमित्सते । निमित्सते । अपमित्सते । दित्सति । दित्सते । धित्सति । आरिप्सते । आलिप्सते । शिक्षति । पित्सति । पित्सते । सकारादाविति किं ? पिपति- षति । सनीति किं ? दास्यति ।

राधो बधे ॥१७५॥ राधेर्बधार्थेऽच इस् भवति सनि परे । प्रतिरित्सति चौरं । बध इति किं ? आरिरात्सति जिनं ।

आप्ज्ञप्यृधामीत् ॥१७६॥ एषामचः ईत्वं स्यात् सनि परे । ईप्सति । ज्ञीप्सति । ईर्त्सति ।

दंभ इच्च ॥१७७॥ दंभेरच इत्वमीत्वं च स्यात् सनि परे । धिप्सति । धीप्सति ।

*मीन्मुचो घे ॥१७८॥ विसग्रकस्य मुचेरच ओत्वं वा स्यात् सकारादौ सनि परत । मोक्षते, मुमुक्षते वत्स स्वयमेव । घेरिति किं ? मुमुक्षति कर्माणि मुनि ।

*घस्योप् ॥१७९॥घस्योम् भवति सनि परे । मित्सतीत्यादि ।

हलोऽन्नाद ॥ १८० ॥ अनादेर्हलस्योप् भवति । बभौ । पपाठ । आट । आटद्दः । प्रत्रीकिषति ।

शर सयि ॥१८१॥ शरभस्योप् भवति सयि परतः । चुक्योतिषति । पिस्पर्धिषते । खयी ति किं ? सस्नौ ।

म ॥१८२॥ भस्य मादेशो भवति । पपौ । निन्ये । प्रचौकिषते ।

हर ॥१८३॥ भस्य धार्थस्य अत्वं स्यात् । चक्रे । जहृते ।

प्रधो भाष् ॥१८४॥ प्रथभस्य भष् भवति । बभार । दधौ ।

खरभर् ॥१८५॥ खरभस्य चर् भवति । चखनतु । पफणुः । चिखनिषति ।

+द्विषो वा ॥१८६॥ द्विषभस्य खरो वा भवति । टिद्वेष । दिद्वेष ।

कुहोश्चुः ॥ १८७ ॥ भस्य कवर्गहकारयो श्चुत्वं भवति । चकतुः । जगाम । जुहुवे । जहास ।

*यक्यकघते ॥१८८॥ यकि भस्याऽकचते कुहोश्चुर्भवति । चोकूयते । चाखायते । जंगम्यते । जेहीयते । अकचतेरिति किं ? कोकूयते ।

*स्वपेरणौ ॥१८९॥ स्वपेर्भस्य उर्भवति णौ परे । सुष्वापयिषति । सुष्वापयिषत ।

*घुतेरि ॥१९०॥ घुतेर्भस्य इर्भवति । दि द्युते । देद्युत्यते ।

व्ययो लिटि ॥१९१॥ व्ययेर्भस्य लिटि परे इर्भवति । विव्याय । विव्ययाते । विव्ययिरे ।

किती णो दी ॥१९२॥ इणभस्य दीर्घभवति किति लिटि परत । ईयतु । ईयु । कितीति किं ? इयाय । इययिथ ।

आयत ॥१९३॥ भस्यादेरत दीर्घभवति लिटि परत । आटिथ । आटतु । आटु । आदिरिति किं ? ददवे । ददवाते । ददविरे ।

*नुह ॥१९४॥ भस्य हलादेरत्त्वस्य नुगागमो भवति । आनंग । आनंगतु । आनगु । आनश ।

अश्नो ॥१९५॥ अश्नोतेर्भस्य हलादेरत्त्वस्य नुट् स्यात् । आनशे । आनशाते । आनशिरे । नियमार्थमिदं—अश्नोतेरेवाकारादेर्नुट् नान्यस्य । आटतु । आटु ।

भुवोऽत्र् ॥१९६॥ भवतेर्भस्य त्रिकारात् भवति । बभूव । बभूवतु । बभूवु ।

निजामुच्येप् ॥ १९७ ॥ निजादीनामुचि परे यस्य एप् भवति । नेनेक्ति । वेवक्ति । वेवेष्टि ।

*भृञहाङ्मामितः ॥१९८॥ एषां च इर्भवति उचि परे । बिभर्ति । जिहीते । मिमीते ।

मो ॥१९९॥ पृ ऋ इत्येतयोर्यस्य इर्भवति उचि परे । पिपर्ति । पिपूर्तात् । अपिपः । इयर्ति । इयृतात् । ऐय ।

सन्यत ॥२०० ॥ यस्यात सनि परे इर्भवति । पिपक्षति । पिपठिषति । अत इति किं लुलूषति ।

ओः पुयण्ज्यपरे ॥२०१॥ यस्य उवर्णस्य पवर्गयण्जकारेषु अवर्णपरेषु परतः सनीत्वं स्यात् । पिपावयिषति । बिभावयिषति । मिमावयिषति । यियावयिषति । रिरावयिषति । लिला वयिषति । जिजावयिषति । पुयण्ज्यीति किं ? नुनावयिषति । प इति किं ? बुभूषति । ओरिति वचनं ज्ञापकं णौ स्थानिवद्भावस्य ।

श्रुस्रुद्रुप्रुप्लुच्योर्वा ॥२०२॥ एषां अवर्णपरे यणि परतः यस्येत्वं स्यात् वा सनि परतः । शिश्रावयिषति । शुश्रावयिषति । सिस्रावयिषति । सुस्रावयिषति । दिद्रावयिषति । दुद्रावयिषति पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति । पुप्लावयिषति । चिच्यावयिषति । चुच्यावयिषति ।

*यङ्पोरेप् यक्विदादाकः ॥२०३॥ यङि यङुपि च परतः यस्य एप् भवति दीर्घ किर्वत आकारा न्तं दाङ् च वर्जयित्वा । नेनीयते । नेनयीति । बोभूयते । बोभवीति । बोभुज्यते । बोभुजीति पापठ्यते । पापठीति । पापच्यते । पापचीति । अक्विदादाक इति किं ? यंयम्यते । यंयमीति । रंरम्यते । रंरमीति । तंतन्यते । तंतनीति । जाहाति । आकारमहणं किं ? जहीयते ।

नीग्वंचुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दां ॥२०४॥ वंच्यादीनां यङुपोः परतः यस्य नीगागमो भवति । वनीवच्यते । वनीवंचीति । सनीस्रस्यते सनीस्रंसीति । दनीध्वस्यते । दनीध्वंसीति । बनीभ्रस्यते । बनीभ्रंसीति । चनीकस्यते । चनीकंसीति । पनीपत्यते । पनीपतीति । पनीपद्यते । पनीपदीति । चनीस्कद्यते । चनीस्कंदीति ।

कस्याञ्तो नुक् ॥२०५॥ यस्य कसशब्दस्याञ्तो नुगागमो भवति यङुपोः परतः । जंगम्यते । जंगमीति । बंभण्यते । बंभणीति ।

जपजभदहदशभंजपशां ॥ २०६ ॥ जपा दीनां यस्य यङुपोर्नुम् भवति । जंजप्यते । जंजपीति । जंजभ्यते । जंजभीति । दंदह्यते । दंदहीति । दंदश्यते । दंदशीति । बंभज्यते । बंभजीति । पंपश्यते । पंपशीति ।

*चर्फलामुत्याञ्तः ॥२०७॥ चर फल् फल इत्येतेषां च यङुपोर्नुम्भवति अतश्च उत्वं । चञ्चूर्यते । चंचुरीति । पंफुल्यते । पंफुलीति ।

ति ॥२०८॥ तकारादौ परे एषां अत उत्वं स्यात् । चूर्ति । फुल्तिः । प्रफुल्ता क्वा ।

रीगृत्वतो ॥२०९॥ ऋकारवतो यस्य रीगा गमो भवति यङि परतः । वरीवृत्यते । वरीवृश्च्यते । परीपृच्छयते ।

रुग्रिक्योपि ॥२१०॥ ऋत्वतां यङुपि च स्य रुक् रिक् रीगागमो भवति । चर्कर्ति । चरि कर्ति । चरीकर्ति । नर्नर्ति । नरिनर्ति । नरीनर्ति । वर्वर्ति । वरिवर्ति । वरीवर्ति । उपीति किं ? वरीवृत्यते । ऋत्वतामिति किं ? चाकर्ति । आगर्ति ।

णौ ङ्यपरेऽनक्लोपे सन्वत् ॥२११॥ यस्य ङ परे णौ सनीव कार्यं भवत्यनक्लोपे । सन्वत इति इत्यमुक्तं ङ्यपि तथा । अपीपचत् । ओः पुयण्ज्य इति । अपीपवत् । अबीभवत् । अति सवत् । असुस्रवत् । णाविति किं ? अततक्षत् । ङ्यपीति किं ? अहं पपच । अनक्लोप इति किं ?

स्तनमास्यत्—अतस्तनत् । अदधनत् ।

*घेर्ईरऽनभावे ॥२१२॥अनभावस्य घेर् ईर्
भवति यौ कर्म्मरे अनकस्य । अजीहरत् ।
अचूचुरत् । घेरिति किम् ? अविभजत् । अनभावे
इति किम् ? औणुनवत् । याविति किं ? अररक्षत् ।

स्मृदृत्वरप्रथम्रदस्तृस्पशामत् ॥ २१३ ॥
एषां चस्मात् भवति कर्म्मरे यौ परत । सन्वद्भा
वापवाद । असस्मरत् । अददरत् । अतत्वरत् ।
अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् ।

वा वेष्टिचेष्ट्यो ॥२१४॥ एतयोरचस्य कर्म्म
त्रा स्यात् । अववेष्टत् । अविवेष्टत् । अचचेष्टत् ।
अचिचेष्टत् ।

* गणश्च ॥२१५॥गणयतेरचस्य कचि वा ई
भवति । अजीगणत् । अजगणत् । चकारादचीकथत् ।

इति जैनेन्द्रव्याकरणे शब्दार्णवचन्द्रिकायां
वृत्तौ पंचमस्याध्यायस्य
द्वितीय पाद ॥२॥

## तृतीय पाद ।

सर्वस्य द्वे॥१॥ सर्वस्येति द्वे इति च एतद्
द्वितयमधिकृतं वेदितव्यं । के द्वे ये शब्दतो
ऽर्थतश्चान्तरतमे । वक्ष्यति-वीप्सायामिति—ग्रामो
ग्रामो रमणीय ।

परो त्रि ॥२॥अनन्तयोर्द्विरुक्तयो परोऽवयवो त्रिसंज्ञो
भवति । माणवक३ माणवक । माणवक माणवक
इदानीं शास्यसि शास्य । त्रिप्रदेशा न प्रेरित्यादय ।

*प्राग्भृशाऽभीक्ष्ण्याविच्छेदे ॥ ३ ॥ भृशा
दिष्वर्थेषु वर्तमानस्य पदस्य वाक्यस्य वा द्वे रूपे
भवत प्रागेव तरतमाद्युत्पत्ते । लुनीहि लुनीहि
इत्येवायं लुनाति । अधीष्वाधीष्वेत्येवाऽयमधीते ।
भुक्त्वा भुक्त्वा व्रजति भोजं भोजं व्रजति ।
पचति पचति अथ पचत्। प्रागिति किं ? पचति पचति
तरां । प्राग्वेति किम् ? लुनीहि ।

+ नानेकायामाधिक्यानुपूर्व्ये ॥ ४ ॥ मानवार्थे
आधिक्य आनुपूर्व्ये चार्थे द्वे स्त । अस्मात्कार्षा
पणादिह भवद्भ्यो माष माष देहि । मानेति किं ?
इह भवद्भ्यो माष देहि । एकार्थ इति किं ? द्वौ
त्रीन् वा माषान्देहि । गुणो गुण । कन्या कन्या
दर्शनीया । ज्येष्ठं ज्येष्ठं प्रवेशय । मूले मूले
स्थूला । अग्रे अग्रे सूक्ष्मा ।

+ चापले ॥ ५ ॥ चापलेऽर्थे द्वे भवत । अहि
रहि । बुध्यस्व बुध्यस्व । हस्त्यागच्छति हस्त्या
गच्छति। लघु पलायध्वं लघु पलायध्वं। प्रयोगात्
त्रिरपि प्रयोग । अहिरहिरहि ।

+ इतरइतमयो समानां स्त्रीभावे ॥ ६ ॥
समानां समस्तेन विभाज्यमानानां इतरइतमान्तस्य
द्वे स्त स्त्रीस्त्रियभावे । उभाविमावाढ्यौ कतरा
कतरा अनयोराढ्यता । कतमा कतमा अनयोरा
ढ्यता । इतरइतमयोरिति किं ? उभाविमावाढ्यौ
कानयोराढ्यता । समानामिति किं ? आढ्योऽयं
कतरास्याढ्यता । स्त्रीति किं ? उभाविमावाढ्यौ
कतरोऽनयोर्विभव । भाव इति किं ? द्वौ इमौ लक्ष्मी-
वंतौ । कतराऽनयोर्लक्ष्मी ।

* पूर्वप्रथमस्याऽन्यातिशये ॥ ७ ॥ पूर्व-
प्रथमयोर्द्वे भवत अन्यस्मादतिशयार्थे । पूर्वं पूर्वं
पुष्यति । प्रथमं प्रथमं पच्यति । अन्यग्रहणं किं
पूर्वतरं पुष्यति । प्रथमतरं पच्यति ।

× प्रो पादसमीपेऽधिपूर्णा ॥ ८ ॥ प्रा द्वे स्त
अधिपूर्वार्थे ।

प्रप्रयन्त्व त्रिन मन्त्र वेर्ममिन्द्र तव मम् ।
उपोपपत्ते अथ उदुरामतेभ्य ॥

*सामीप्येऽधोऽध्युपरि ॥ ९ ॥ स्यां द्वे स्त
सामीप्येऽर्थे । अधोऽधो नरकाणि भूमयः इहर्ष्य
उपर्युपरि स्वर्गपटलानि । सर्वान्त त्रि

अविद्यमानवदिति किं ? ज्ञानं युवाभ्यां कृतं । आवाभ्यां कृतं । सग्रहणं श्रूयमाणविभक्त्यर्थं इह मा भूत् । इति युष्मत्पुत्राभ्यायो ब्रूते इत्यस्मत्पुत्राभ्यायो ब्रूते ॥

बहोर्वस्नस् ॥ २५ ॥ अविशेषणयोस्तयोर्वस्नसौ स्तः । ज्ञानं वो दीयते । शीलं नो दीयते । ज्ञानं वो रक्षतु । शीलं नो रक्षतु । ज्ञानं वः स्वं । शीलं नः स्वं ।

एकस्य तेमे ॥ २६ ॥ अथैकार्थयोस्तयोस्ते मे इत्येतावादेशौ भवतः । ज्ञानं ते दीयते । शीलं मे दीयते । ज्ञानं ते स्वं । शीलं मे स्वं ।

त्वामौ पः ॥ २७ ॥ इत्येकार्थयोस्तयोस्त्वा मा भवतः । मल्लिनाथस्त्वा रक्षतु । मुनिसुव्रतो मा रक्षतु ॥

न चवाहाहैवयोगे ॥ २८ ॥ चादिभिर्योगे तयोर्वान्नावादयो न भवंति । ज्ञानं तुभ्यं च दीयते । मह्यं च दीयते । युवाभ्यां च दीयते । आवाभ्यां च दीयते । युष्मभ्यं च दीयते । अस्मभ्यं च दीयते । ज्ञानं त्वां च पातु । मां च पातु । युवां च पातु । आवां च पातु । युष्मांश्च पातु । अस्मांश्च पातु । ज्ञानं तव च स्वं । ज्ञानं मम च स्वं । युवयोश्च स्वं । आवयोश्च स्वं । युष्माकं च स्वं । अस्माकं च स्वं । ज्ञानं तुभ्यं वा दीयते । मह्यं वा दीयते । तुभ्यं ह दीयते । मह्यं ह दीयते । तुभ्यमह दीयते । मह्यमह दीयते । तुभ्यमेव दीयते । मह्यमेव दीयते । योगग्रहणं किं ? ज्ञानं च व स्वं । शीलं च न स्वं ।

दृश्यर्थैश्चिन्तायां ॥ २९ ॥ दृश्यर्थैश्चिन्तायां वर्तमानैर्योगे तयोर्वान्नादि न भवति । ज्ञानं तुभ्यं दीयमानं समीक्ष्यागतो जन । मह्यं दीयमानं समीक्ष्यागतो जन । जन त्वां समीक्ष्यागत । मां समीक्ष्यागत । जनस्तव कार्यमालोचयति । मम काव्यमालोचयति । दृश्यर्थैरिति किं ? जनो वो मन्यते । चिन्तायामिति किं ? जनो न पश्यति ।

वाऽनन्वादेशे ॥ ३० ॥ तयोर्वान्नावादयो वा भवन्त्यनन्वादेशे । धर्मो वो दीयते, युवाभ्यां दीयते । ज्ञानं नौ दीयते, आवाभ्यां दीयते । धर्मो वां पातु, युवां पातु । जिनो नौ पातु, आवां पातु । धर्मो वां स्वं, युवयोः स्वं । धर्मो नौ स्वं, आवयो स्वं । धर्मो वो दीयते । युष्मभ्यं दीयते । नो, अस्मभ्यं दीयते । धर्म ते दीयते, तुभ्यं दीयते । मे दीयते, मह्यं दीयते । जिनस्त्वा पातु, त्वां पातु । मा पातु, मां पातु । अनन्वादेश इति किं ? यूयं विनीतास्तद्वो गुरवो मानयति । वयं शीलवतः सतो गुरवो मानयंति । यूयं विनीतावित्यादिश्य पश्चाद्विनयमादिश्यते इत्यन्वादेशोऽयं ।

*पदाद्वा ॥ ३१ ॥ पदात्परं यद्दृष्टं तस्मात् परयोर्वान्नावादयो वा भवंति । विनीतस्त्वं आचार्येण ज्ञानं ते दीयते, तुभ्यं दीयते । मे दीयते, मह्यं दीयते । एवं सर्वत्र ।

*बोध्यं मामंत्र ॥ ३२ ॥ बोध्यार्थं पदं ताभ्यां पूर्वं नेव–मादीव भवति । देवदत्त तुभ्यं दीयते । मह्यं दीयते । त्वां रक्षतु । मां रक्षतु । बोध्यमिति किं ? जिनो वां पातु । मागिति किं ? भये तत्सर्वमास्माक युष्माकं मुनिपुंगवा ।

*नैकार्ये बोध्ये जातिः ॥ ३३ ॥ एकार्थे बोध्येति परे जाति सामान्यवचनं बोध्यार्थं मामीव न भवति । क्षत्रिय श्रेणिक त्वाऽर्हन् पातु । आशीर्दीयते ते आयुर्वर्धतां । एकार्थ इति किं ? क्षत्रिय ब्राह्मण युवां धर्मो दीयते । बोध्ये इति किं ? क्षत्रिय भगवान् मे त्वं वेहि । जातिरिति किं ? श्रेणिक क्षत्रिय तुभ्यं धर्मो दीयते ।

*वा बहौ ॥ ३४ ॥ एकार्थे बोध्ये बहुत पि

शेषवचने मादिः योऽम्मोता मान्नेव वा भवति। देवा शरण्याः वो दीयते युष्मभ्यं दीयते। नो दीयते। अस्मभ्यं दीयते। देवा शरण्या वे भवतु, तव भवतु। मे भवतु, मम भवतु।

पूर्वत्राऽसिद्धं ॥ ३५ ॥ पूर्वत्रेति च असिद्धमिति च पठ्यं द्वितयमाधिक्रतं शास्त्र आशास्त्रपरिसमाप्तेः। पूर्वस्मिन् शास्त्रे साद्धद्वि पादचतुरध्याये कर्तव्ये परं शास्त्रं सार्द्धपादम सिद्धं भवति। इत उत्तर च पूर्वस्मिन् योगे कर्तव्ये परः परो योगोऽसिद्धो भवति। त आहु। द्वा इमौ। यत्वस्याऽसिद्धत्वात् दी-एपौ न स्त। अमुष्मै। अमुष्मात्। उत्वस्या सिद्धत्वात् स्मायादयो भवंति। पचन्। नले सत्वमसिद्धं।

शुष्किक्म यस्तुभर्माय शामिमानीवरस्तुगी। पक्काद्यमीप्सु गोविम्मान् कुर्वेति पिपठीः मुमुत्।

सर्वं सुब्विधिकृत्तुक्ति ॥ ३६ ॥ सुप सुपि च विधि कृति तुकं च प्रति नलमसिद्धं भवति। राजभि। राजभ्यां। राजस्व। पेम्मी एष न भवति। वृत्रहभ्यां। वृत्रहभि। नलाऽसिद्धत्वाऽऽत्मं भवति। सुब्विधिकृतुकीति किं? राजी भवति। वृत्रहच्छत्रं। नियमोऽयं—एतयेरेव नलम सिद्धं मान्यत्र। हस्त्यर्थ। राजायका।

न मु टाविपौ ॥ ३७ ॥ टाहाने टानीमिते च विधौ कर्तव्ये मुभावोऽसिद्धो न स्यात्। अमुना मुत्वस्य सिद्धत्वात् मुकारणो नाभावः मुप्यदीर्त्व च सिद्धं।

+ वादेशस्त्यप ॥ ३८ ॥ स्वविधौ वत्वविधौ च पठ्यस्य सर्वात्रकारयोऽसिद्धो न भवति। धीकेण धराति श्रीविके। वृक्ण। वृक्णवान्। त्यप इति किं? वक्ष। वक्णवान्।

+ पा पुम्नुको ॥ ३९ ॥ रेतल च शादि च कर्तव्ये पविधिरासिद्धो न भवति। मुतपा ३ अत्र। अम्ना ३ अत्र।

+ प्यो नुस्वारे ॥ ४० ॥ प्यविधिरनुस्वारे कर्तव्ये भासिद्धो न भवति। मुंप्यादि।

+ पतुक्सुद्विले ॥ ४१ ॥ पत्व तुक्सुलं च द्विले सिद्धं न भवति। पिपुपुपपु। उचिच्छिपति।

+हादिर्द्विले ॥ ४२ ॥ हस्त्वादयो द्विल कर्तव्ये सिद्धा न भवति। द्रोग्धा। द्रोग्धा। ग्राम्या द्रोग्धा। गको गक। मरो मर।

* नो मूर्द्धे स्वं ॥४३॥ मूर्द्धो वर्तमानस्य नकारस्य स्वं भवति। राजा। राजभ्यां। राजत्वं। राजता। राजतरः। राजतम। मृदव इति किं? देवान्विरन्। नराभ्यां। नमाभ्यां। पदस्येति किं? राजानौ। राजन।

न कौ ॥ ४४ ॥ पदांतस्य नकारस्य सं न स्यात् कौ परे। हे राजन्। हे तक्षन्।

नपि वा ॥ ४५ ॥ नपुंसके नलं न स्याद्वा कौ परत। हे चर्मन्। हे चर्म।

मनोक्त्वयो मतोर्वोऽप्ययादिभ्य ॥ ४६ ॥ मकारांतावर्णांतान्मकारोकोऽवर्णांत शतैतयो परस्य मतोर्वत्वं स्यात् यवादीन्विहाय। किम्वान्। इवम्वान्। धीलवान्। गुणवान्। विद्यावान्। लक्ष्मीवान्। यशस्वान्। भास्वान्। उदश्वित्वान्। मनोत्वस्य इति किं? धीमान्। अयवादिभ्य इति किं? यवमान्। ऊर्मिमान्। भूमिमान्। गारुत्मतीत्यादि।

सौ ॥ ४७ ॥ सुविषये मतोर्वो भवति। कपीवती। मणीवती। महीवती।

चर्मण्वत्यष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वत् ॥ ४८ ॥ एते निपात्यंते सौ। चर्मण्वती नदी। मकारस्य णा-भावो मत्वं निपात्यते। अष्ठीवान् अंघोरसंधि। अस्थिशब्दस्य अष्ठीभावो निपात्यः। चक्रीवान् राजायद्गार्थे चक्रस्य चक्रीभावो निपात्यते। कक्षी

वान् । अपिहस्त्यर्थे कक्षाशब्दस्य कक्षीमावः । रुमण्वान् । मंत्रिपवलार्थे लवणस्य रुमण्भाव । स्तावदिति किं ? चर्मवती । अस्थिमान् । चक्रवान् । कक्षावान् । लवणवान् ।

* अम्भौ चादन्वान् ॥ ४९ ॥ अम्भौ सौ च उदकस्य उदन्भतो निपात्यः । उदन्वान् घटा मेघश्च । उदन्वान् समुद्रः अपि, आम यम । उदकवानन्यत्र ।

राजन्वान्सौराज्ये ॥ ५० ॥ सौराज्येऽर्थे राजन्वानिति निपात्यत । राजन्वान् देश । राजन्वती पृथ्वी । सौराज्य इति किं ? राजवान् देशः ।

कृपो रो लाऽकृपादीनां ॥ ५१ ॥ कृपेः रेफस्य लत्व भवति कृपादीस्त्यक्त्वा । कल्पते । कल्पः । कल्पवान् । कल्प्यते । कल्पकः । अकृपादीनामिति किं ? कृपा । कृपणः । कृपाणः । कृपीटः । कर्पूरः । कर्पट । कर्परः ।

गे रयौ ॥ ५२ ॥ गे रेफस्य लादेशो भव त्यऽयतौ परतः । प्लायते । पलायते । अमाविति किं ? प्राम ।

× निदुःमतेवा ॥ ५३ ॥ एषां रेफस्याऽयो लो वा भवति । निलयते । निरयते । दुर्ल्यते । दुर यते । प्लस्यते । प्रत्यते ।

परेर्घाङ्कयोगे ॥ ५४ ॥ परे रेफस्य लो वा भवति घादौ परे । पलिघः । परिघ । पल्यङ्क । पर्यङ्क । पलियोग । परियोग ।

+कपार्फिकादीनां ॥ ५५ ॥ कपिकादीनां रफस्य ड कारस्य च लो वा स्यात् । कपिल । कपिर । लोमानि । रोमाणि । कल्म । कम । मल । मर । कपिल । कपिर । चूल । चूड । गुल । गुड । पीला । पीडा । नल । नड ।

* ग्रोऽचि ॥ ५६ ॥ गिरतेः रफस्य लो वा भ वत्यजादौ परत । गिलति । गिरति । गालक । गारक । गल्नं । गरणं । अचीति किं ? गीर्ण ।

* यङि ॥ ५७ ॥ ग्रो रेफस्य यङि लो भवति । निजगिल्यते । निजेगिल्यते । निजेगिल्यते ।

* गरगलं विषाऽपगे ॥ ५८ ॥ अनयाविषि प्राण्यंगे च यथासंख्ये निपात्येतेगरो विषागलःकंठ ।

स्फोतस्य सं ॥ ५९ ॥ स्फसंज्ञकान्तस्य स भवति । भवान् । विद्वान् । भयान् । पुम्वा । पदस्येति किं ? भवतो ।

रात् स ॥ ६० ॥ रेफादुत्तरस्य सकारस्य सं भवति । कटचिकी । गिरी । मातृ । नियमार्थोऽयं योग । रफात्सस्यैव सं नान्य स्य । ऊर्क् । न्ययाद् ।

षि मा ॥ ६१ ॥ षकारादौ परत ससंज्ञा स्यात् माष्य । मात्स्म । माषाभ्यं । मासात्र्यं । पकापि । पकादि ।

झसो झषि ॥ ६२ ॥ झल परस्य सका रस्य झलि परं स भवति । अभैत्ता । अभित्त । अभित्ता । अछित्त । अछित्ता । झल इति किं ? अमंस्त । झलीति किं ? अमैस्त ।

माङ्गाः ॥ ६३ ॥ मांतात् गो परस्य सका रस्य सं स्यात् झलि परे । अकृत । अकृथा । माविति किं ? अक्षोष्ट । अच्याष्ट । गारिति किं ? अकाषिष्ट ।

स्फात् स्कोऽन्त च ॥ ६४ ॥ सकारक कारयोः स्फयो वर्तमानयो सं भवति झलि पदान्ते च । लम । लग्नवान् । साधुलक् । तट् । तष्टवान् । काष्ठतट् । मालट् । स्फयोरिति किं ? न्यस्त । यक्त । पदे चेति किं ? लक्षिता । तक्षिता ।

चोः कु ॥ ६५ ॥ चवर्गस्य कवर्गादेशो भवति झल्यंते च । वक्ष्यति । वक्ता । वाक् । पक्ता । पक्तु । पक्तव्यं । ओदनपक् ।

हो ढ ॥ ६६ ॥ हकारस्य ढकारादेशो भवति

ध्यानवान् । स्फायीरिति किं ? मातः । मातवान् । मास इति किं ? च्युतः । च्युतवान् । पोरिति किं ? निर्माताः । मण्यस इति किं ? ध्यातः । अपास्य इति किं ? ध्यात । ध्यातवान् । स्यात । स्यातवान् ।

ल्वादे ॥ ८२ ॥ ल्वादिभ्यः सतस्य नकारादेशो भवति । लूनः । लूनवान् । जीनः । जीनवान् । धून । धीनः ।

ऋतश्च के ॥ ८३ ॥ ऋकारान्तेभ्यो ल्वादिभ्यश्च क्तेस्तकारस्य नो भवति । कीर्णिः । धूनिः । लूनि ।

ओदितः ॥ ८४ ॥ ओकारेतभ्यस्तकारस्य नो भवति । पीन । पीनवान् । मग्न । मग्नवान् ।

* क्षय ॥ ८५ ॥ क्षयदीर्घात् क्तेस्तकारस्य नो भवति । क्षीणः । क्षीणवान् । दीर्घनिर्देश किं ? क्षितोऽसि मास्म ।

* घ्राध्माघ्रात्रीनुदोन्दविन्दर्वा ॥ ८६ ॥ एभ्यस्तकारस्य नो वा स्यात् । घ्राण । घ्रात । घ्राणवान् । घ्रातवान् । ध्माण । ध्मात । ध्माणवान् । ध्मातवान् । त्राण । त्रात । त्राणवान् । त्रातवान् । हीण । हीत । नुन्नः । नुत्त । समुन्न । समुत्त । विन्नः । वित्त ।

श्यातिविदिशोऽस्पर्शोपादानभये ॥ ८७ ॥ एभ्य ततकारस्य नो भवत्यस्पर्शादौ । प्रतिशीन । समक्तौ । शकुनेः पक्षौ । आपून । अस्पर्शादाविति किं ? शीतो वात । उदकमुदकं कूपात् । पूर्त वर्तते ।

प्यो भावे ॥ ८८ ॥ पुनातेस्तकारस्य नो भवति नावेऽर्थे । पूना यवाः । भाव इति किं ? पूत धर्म ।

सेः कर्मकर्तरि ग्रासे ॥ ८९ ॥ सिनोतेस्तस्य नो भवति ग्रासे कर्मणि कर्तृत्वेन विवक्षिते । सिनो ग्रास स्वयमेव । कर्मकर्तरीति किं ? सितो गलो ग्रासेन । ग्रास इति किं ? सिता पाशेन शूकरी ।

निर्वाणोऽवाते ॥ ९० ॥ निस्पूर्वाद्वाते स्ततस्य ना निपात्यतेऽवातेऽर्थे । निर्वाणो मुनि । अवात इति किं ? निर्वातो वात ।

दुग्वा दीर्घ ॥ ९१ ॥ दुगुभ्यां ततकारस्य नो भवति तत्सन्नियोगे दीर्घश्च । दून । दूनवान् । गून । गूनवान् वत्सः ।

शुष्पचोः कौ ॥ ९२ ॥ आभ्यां ततकारस्य ककारवकारावादेशौ स्त । शुष्क । शुष्कवान् । पक्व । पक्ववान् ।

क्षो मः ॥ ९३ ॥ क्षायतेस्ततकारस्य मादेशो भवति । क्षाम । क्षामवान् ।

प्रस्त्यो वा ॥ ९४ ॥ प्रस्त्यायतेस्ततकारस्य मो वा स्यात् । प्रस्तीत । प्रस्तीम । प्रस्तीतवान्, प्रस्तीमवान् । प्रपूर्व किं ? संस्त्यानवान् ।

फुल्लः ॥ ९५ ॥ फुल्लेर्विसरणार्थस्य ला निपात्यते । फुल्लो वनस्पतिः ।

समुदः ॥ ९६ ॥ समुद्भ्यां परः फुल्ले निपात्यः । संफुल्लः । संफुल्लवान् । उत्फुल्ल । उत्फुल्लवान् । नियमार्थमिदं-समुद्भ्यामेव मान्यस्मात् । प्रफुल्ला लता ।

क्षीबकृशोल्लाघाः ॥ ९७ ॥ क्षीबादीनां त शब्दस्य सं निपात्य । क्षीब । क्षीबवान् । कृशः कृशवान् । उल्लाघः । उल्लाघवान् ।

* भित्तं शकल ॥ ९८ ॥ भिदेः क्तस्य नत्वाभावो निपात्य शकलार्थश्चेत् । भित्तं । शकलं भित्तं । भिन्नमन्यत् ।

* वित्त ख्यातार्थे ॥ ९९ ॥ लाभार्थाद्विदेः क्तस्य नत्वाभावो निपात्य ख्यातधर्मोऽर्थपर्यायो वा भवति चेत् । वित्त विख्यात । वित्त धर्म । विन्नमन्यत् ।

क्तिन्नस्य क्तः ॥ १०० ॥ क्तिस्या यस्य तस्य यो

* मोऽभ मस्यभिवादेऽर्द्धशूद्र वा ॥१२॥ स्त्रीशूद्रवर्जिते मस्यभिवादे वर्तमानस्य वाक्यस्य टे पो वा स्यात् भो शब्दस्य च । अभिवादये देवदत्तोऽहं भो । आयुष्मानधि देवदत्त ३ । आयुष्मानधि देवदत्त । अभिवादये देवदत्तोऽहं भो । आयुष्मानेधि भो ३ ॥ आयुष्मानेधि भो । अस्त्रीशूद्र इति किं ? अभिवादये—गार्ग्यहं भो । आयुष्मती भव गार्गि । अभिवादये तुषजकोऽहं भो । कुशलस्यासि तुषजक ।

* दूराद्धूते ॥ १२१ ॥ दूरात् धूते—आहूयमान वाक्यस्य टे पो वा स्यात् । आगच्छ भो देवदत्त ३ ॥ पक्षे न भवति ।

हैहेष्वपामव ॥ १२२ ॥ हैहयो प्रयोगे तयोरेव पो वा भवति । है ३ देवदत्त आगच्छ । आगच्छ हे ३ देवदत्त । है देवदत्त आगच्छ । आगच्छ है देवदत्त । हे ३ गुरुदत्त हे ३ देवदत्त आगच्छ । आगच्छ हे ३ गुरुदत्त । पक्षे—हे गुरुदत्त आगच्छ । गुरुदत्त आगच्छ हे ॥

* स्वनृतोऽन्त्यस्यस्याऽप्यकस्य रो ॥१२३॥ ऋकारस्य अर्द्धनिर्मितस्य च रारनरपस्यासपस्यापि टस्य पकस्य पो वा स्यात् । आगच्छ हे कृष्ण ३ मित्र । आगच्छ हे कृष्णमित्र ३ । आगच्छ हे कृष्णमित्र । दे ३ वदत्त । देवद ३ त्त । देवदत्त ३ । पक्षे न भवति—देवदत्त । अनृत इति किं ? कृष्णमी ३ त्र । कृष्णमित्रा ३ । रोरिति किं ? देवदत्त । वकारास्तरस्य मा भूत् । एकस्येति किं ? अनेकस्य रो टिना च सहायोगपद्यार्थं ॥

* ओं मारम्भे ॥ १२४ ॥ ओमित्येव मारम्भे मणामाम्यावान पो वा स्यात् । ओ३म् इत्यर्थं पवित्रं मणमत । पक्षे नामारंभ इति किं ? ओं दद्यामि ।

हेः पृष्टोक्तौ ॥ १२५ ॥ पृष्टोक्तौ मविष पन हेः पो वा स्यात् । अकार्षी केदार देवदत्त । अकार्षं ही ३ । अकार्षीः हिरण्याकाविति किं ? अकार्ष हि कट देवदत्त ।

* चितीव ॥ १२६ ॥ चिदित्यतस्मिन्निवार्थे प्रयुज्यमाने वाक्यस्य टेः पो वा स्यात् । राजा चिद् भूया ३ त् । पक्षे न । चितीति किं ? अग्निरिव भायात् । इव इति किं ? कथंचिदाह ।

* मासो विचारे ॥१२७॥ विचारे वर्तमानस्य मासः पूर्वस्य वाक्यस्य टे पो वा भवति । अहिर्नु ३ रज्जुर्नु । अहिर्नु रज्जुर्नु । स्थाणुर्नु ३ पुरुषो नु । पक्षे न ।

* मविभुविपु ॥ १२८ ॥ मतिमयमानिषु वर्तमानस्य वाक्यस्य टे पो वा भवति । गां मे देहि भो । हंत ते ददाम्यामि ३ । अनित्य शब्दो भवितुमर्हति ३ । देवदत्त भो किमात्थ ३ ।

पूजिते ॥ १२९ ॥ पूजितेऽर्थे टेः पो वा भवति । शोभनः खल्वसि देवदत्त ३ । पक्षे न ।

* कोपादौ मौ ॥१३०॥ कोपादिष्वर्थेषु टेर्वा पो भवति मौ परतः । माणवक ३ माणवक । अविनीतक ३ अविनीतक । इदानीं ज्ञास्यसि जाल्मेत्यादि । न च पक्षे ।

* भर्त्सेऽन्यतरस्य ॥१३१॥ भर्त्सनेऽर्थेऽन्यतरस्यैकस्य वा पो भवति । चोरा ३ चोर चोर वध्यिष्यामि त्वां । मारयिष्यामि त्वां ।

* मिडोऽपेक्षस्यागेन ॥१३२॥ भर्त्सेऽर्थे मिडन्तस्य वाक्यांतरपदाकाङ्क्षस्य वा पो भवत्यग शब्देन योगे । अग कूजा ३ इदानीं ज्ञास्यसि जाल्म । पक्षे न । मिङ इति किं ? अग देवदत्त मिथ्या वदसि । अगेनेति किं ? देवदत्त कूज इदानीं ज्ञास्यसि जाल्म । भर्त्स इति किमंगाधीष्व मोदकं दास्यामि ।

* क्षयाशीःप्रैषे ॥१३३॥ एष्वर्थेषु मिडन्तस्य वाक्यांतराकाङ्क्षस्य टे पो वा भवति । स्वयं यो

मान्यस्य । गीर्षु । धूर्षु ।

+ रवम्परे रख वा ॥ २७ ॥ रुम्परे मरि रफस्य सं भवति वा । चतस्सरति । चेतस्सरति । चेत स्सरति । कस्कंरति । कष्करति । कः स्करति । सम्पर इति किं ? क सरति । कस्सरति ।

छवि ॥ २८ ॥ रेफस्य सकारादेशो भवति छवि परत । करिष्यति । कारकारः । कस्सुकति । कस्सरति । कश्चीयते । कस्सरति ।

कुप्वास्त्येऽब्रेः सिः ॥ २९ ॥ कवर्गपवर्गौ द्वौ त्य परे सिर्भवति रेफस्य सिर्भवति । काम्य कम्य प्रत्ययोदाहरणं । पयस्काम्यति । पयस्कल्पं । सर्पिष्कं । पयस्पाशं । त्य इति किं ? पयः पिबति । अब्रेरिति किं ? मुहुः काम्यति ।

* रेरेव काम्ये ॥३०॥ रेरिघ्रानुबन्धस्यैव काम्ये त्ये सिरादेशो भवति नान्यस्य । पयस्काम्यति रेरिति किं ? धूः काम्यति ।

* निर्दुर्बहिराविश्चतुरावि:प्रादुसः ॥ ३१ ॥ निरादीनां रेफस्य सिर्भवति कुप्वोः परत । निष्कृप । निष्पर्य । दुष्कृतं । दुष्पीतं । बहिष्कुरु । बहिष्पिब । चतुष्कं । चतुष्पदी । आविष्कृत्य । आविष्पठ । प्रादुष्कुर्यात् । प्रादुष्पच ।

नम पुरसोस्त्योः॥३२॥तयोस्त्सिर्भवति रेफस्य सिर्भवति कुप्वो परतः । नमस्कृत्य । नमस्कर्ता नमस्कर्तुं । नमस्कर्तव्यम् । पुरस्कृत्य । पुरस्कर्ता । स्त्योरिति किं ? नम कृत्वा । पुर कृत्वा

तिरसो वा ॥ ३३ ॥ तिरसो रफस्य सिर्वा भवति । तिरस्कृत्य । तिर कृत्य । तिरस्कर्ता । तिर कर्ता ।

सुप ॥ ३४ ॥ सुप्रतस्य रेफस्य सिर्वा स्यात् कुप्वा परतः । द्विष्कुरु । द्विःकुरु । द्विःकुरु । द्विष्पठ । द्विःपठ । द्विःपठ । त्रिष्करोति । त्रिःकरोति । त्रि करोति । त्रिष्पचति । त्रिःपचति । त्रि पचति । चतुष्करोति । चतुःकरोति । चतुः करोति । चतुष्पठति । चतुःपठति । चतु पठति ।

इसुसोऽपेक्षायाम् ॥ ३५ ॥ इसुसंतस्य रफस्य सिर्वा स्यात् कुप्वोरन्यान्यापेक्षायाम् । सर्पिष्करोति । सर्पिःकरोति । सर्पिः करोति । सर्पिष्पिबति । सर्पिःपिबति । सर्पि पिबति । धनुष्करयति । धनुःकरयति । धनु करयति । धनुष्पाति । धनुःपाति । धनुः पाति । इसुस इति किं ? पयः कुरु । अपेक्षायामिति किं ? तिष्ठतु सर्पिः पिबत्वम् ।

नैकार्थेऽक्रिये ॥ ३६ ॥ इसुसोरेफस्य सिर्न भवति क्रियापदहीनैकार्थेदस्थया कुप्वोरपरयोः । सर्पि कालकं । यजुः पीतकं । एकार्थ इति किं ? सर्पिष्कुंभे । अक्रिय इति किं ? सर्पिष्क्रियते ॥

सऽग्रुस्यस्य ॥ ३७ ॥ इसुसा रेफस्याऽसुपुस्य से सिर्भवति कुप्वोः परतः । सार्पिष्कुंडं । सर्पिष्पानं । धनुष्करं । स इति किं ? आम्ली सर्पिःपिब धीरे । मधुस्तस्यति किं?सत्सर्पिष्कुंड ।

इकमिकंसकुंभकुशाकर्णीपात्रेऽव्योऽस्य ॥३८॥ इकम्यादिष्वतः परस्यासेः रेफस्य से अधुत्पस्य सिर्भवति । अयस्कारः । अयस्कन् । यशस्कामा । अयस्कंसः । अयस्कुम्भ । अयस्कुशा । अयस्कर्णी । पयस्पात्र । अत इति किं ? गीः कारः धूः कारः । अव्यारिति किं? स्वः कन् । प्रातःकारः । अद्युस्यस्येति किं ? सुपयस्कारः ।

शिरोऽप्सरः पदे ॥ ३९ ॥ अनयोरद्युस्यस्य रफस्य पदे परतः से सिर्भवति । शिरस्पदं । अप्सरस्पदं । स इति किं ? शिरस पदं ।

* करस्कादिषु ॥४० ॥ एषु वर्तमानस्य रेफस्य सिर्भवति कुप्वोः परतः । करस्कः । कौतस्कुतः । भास्करः । अयस्पिंड । इत्यादि ।

* किणास्ससे ष ॥ ४१ ॥ कवर्गेण्भ्यो परस्य सकारस्य सेषः षो भवति । इत्यधिकारो

सेधः । वक्ष्यति—स्यादेशयो । वायुषु । मुनिषु । सिषेच । सर्पिष्काम्यति । किम्योरिति किं ? मान्यति ।

नुम्स्वरः ॥ ४२ ॥ किण्भ्यां परो यो नुम् स्वर् च तस्मात्सम्योः षो भवति । सर्पींषि । धनूंषि । सर्पिःषु । धनुःषु ॥

स्यादेशयो ॥ ४३ ॥ साम्नां स्यसकारस्य आदेशसकारस्य च षत्वेशो भवति । एषु । एषा । सुष्वाप । साधुषु । कर्तृषु । दिक्षु ।

शास्वसघसां ॥ ४४ ॥ किण्भ्यां परस्य एषां सकारस्य षो भवति । शिष्टः । शिष्टवान् । घ्नत । अक्षत ॥

षणि षाण्णिस्तोरेमासिवत्स्वत्सह ॥४५॥ षणि परभूते सनि परे षासरस्य सकारस्य षादेशो भवति ण्यन्तानां स्तोतेश्च सिवादि स्वदि सहो विहाय । सिषेवयिषति । सुष्वापयिषति । सुष्टूषति । नियमोऽयम्—णिस्तोरेव षणि षत्व मान्यस्य । सुसूषति । सिसिक्षति । षकार इह नियमार्थं । सिषो षण्येवेति माभूत् । असी षिवत् । तुष्टाव । षणीति किं ? सिषेच । षत्वनि र्देश किं ? सिषासति । सुषुप्सति । नकारग्रहणं किं ? व्यतिसुषुपिषे । षादिति किं ? प्रतीषिषति । आसिवस्वत्सह इति किं ? सिस्वेदयिषति । सिस्वा दयिषति । सिसाहयिषति ।

*समेर्षो ॥ ४६ ॥ संबेर्ष्यन्तस्य षणि षास रस्य षो वा स्यात् । सिषंजयिषति । सिसंजयिषति

गेः सुनसुसोस्तुस्तुभोऽट्यप्यपि ॥ ४७॥ गेरिण्मतात्परेषां एषां सकारस्याटि सत्यऽसत्यपि षो भवति । परिषुणोति । विषुणोति । अभिषुणोति । पर्यषुणोत् । निषुवति । विषुवति । परिषुवति । न्यषुवत् । विष्यति । निष्यति । अभिष्यति । व्यष्यत् । नमिनायमभिष्टौमि । अभ्यष्टौत् । निष्टौति । विष्टौति । परिष्टौति । अभिष्टोभते । निष्टोभते । अभिष्टोभते । अभ्यष्टोभत । गेरिति किं ? दधि सुनोति ।

* स्थासेनिसेधसिचसञ्जस्वंनोऽड् षेऽस्य च ॥ ४८ ॥ स्थादीनां गे परेषामटि षे च सत्य सत्यपि अस्य च षस्य षो भवति । अनुष्ठास्यति । निष्ठास्यति । विष्ठास्यति । अभिष्ठास्यति । परिष्ठास्यति । अन्वष्ठात् । अनुतष्ठौ । अभि षेणयति । निषेणयति । परिषेणयति । अभ्य षेणयत् । अभिषिषेणयिषति । निषेधति । विषे धति । अभिषेधति । परिषेधति । न्यषेधत् । निषिषेध । विषिंचति । निषिंचति । परिषिंचति । अभिषिंचति । न्यषिंचत् । विषिषिक्षति । विष जति । निषजति । परिषजति । अभिषजति । न्यषजत् । विषषंज । परिष्वजते । निष्वजते । विष्वजते । परिषिष्वंक्षते ।

सदाऽप्रतेः ॥ ४९ ॥ अप्रतेर्गे परस्य सदेः षो भवति । निषीदति । विषीदति । परिषीदति । न्यषीदत् । निषीदयते । निषसाद । अभिषिष त्सति । अप्रतेरिति किं ? प्रतिसीदति ।

स्तम्भे ॥५० ॥ गेः परस्य स्तंभे षो भवति । निष्टभ्नाति । प्रतिष्टभ्नाति । परिष्टभ्नाति । विष्टभ्नाति । न्यष्टभ्नात् । अभितष्टंभ । प्रतितष्टम्भयते ।

* आश्रयाऽविदूरोर्ध्वेऽवाच ॥ ५१ ॥ अवा द्गेरुत्तरस्य स्तम्भेः षकारादेशो भवति आश्रये—अवि दूरे ऊर्ध्वे चार्थे । अवष्टभ्यास्ते । अवष्टब्धे सेने । अहो सुभटस्यावष्टंभः । एष्विति किं ? अवस्तब्धो वृषल । अवष्टभ्यादुपष्टंभः ।

वेश्च स्वनोऽशने ॥ ५२ ॥ वेरवाच्चोत्तरस्य स्वनेः षो भवति—अशनेऽर्थे । विष्वणति । व्यष्वणत् । विषष्वाण । अवष्वणत् । अवर्ष ष्वण्यते । अशन इति किं ? विस्वनति मृदंगः ।

* परिनिवेः सेवः ॥ ५३ ॥ एभ्यः सेवतेः

अटि षे च सत्यमत्यपि षो भवति । परिष्वजते । पर्य्यषेवत । परिषिषेविषते । निषेवते । विषेवते । न्यषेवत् । व्यषेवत् ।

* सितसयस्य ॥ ५४ ॥ परिनिविभ्य सित सययोः षो भवति । परिषितः । निषित । विषितः । परिषयः । निषय । विषय ।

सिवुसहसुट्स्तुस्वञ्जः ॥ ५५ ॥ तेभ्य सिवादीनां षो भवति । परिषीव्यति । निषीव्यति । विषीव्यति । परिषहते । निषहते । विषहते।परिष्करोतिनेमिमार्थं परिष्टौति।परिष्वजते।

षाऽटि ॥ ५६ ॥ तेभ्य सिवादीनां अटि षो वा स्यात् । पर्य्यषीव्यत् । पर्यसीव्यत् । न्यसीव्यत् । न्यषीव्यत्।व्यषीव्यत् । व्यसीव्यत् । पर्य्यषहत । पर्यसहत । न्यषहत । न्यसहत । व्यषहत । व्यसहत । पर्य्यष्करोत् । पर्यस्करोत् । न्यष्करोत् । न्यस्करोत् । व्यष्करोत् । व्यस्करोत् । पर्य्यष्टौत् । पर्यस्तौत् । न्यष्टौत् । न्यस्तौत् । व्यष्टौत् । व्यस्तौत् । पर्यष्वजत् । पर्यस्वजत् । न्यष्वजत । न्यस्वजत् । व्यष्वजत् । व्यस्वजत् ।

* स्यंदोऽप्यमोमाप्राणिवे ॥ ५७ ॥ अभ्य नुभ्यां तेभ्यश्चोत्तरस्य स्यदे षो वा स्यादजीवेऽर्थे। अभिष्यंदते अभिस्यन्दते तैलं । अनुष्यदते, अनुस्यंदते । परिष्यदते परिस्यंदते । निष्यं दते निस्यंदते । विष्यंदते, विस्यंदते । अजीव इति किं । अभिस्यंदते मत्स्यः ।

वेः स्कन्दोऽक्ते ॥ ५८ ॥ वे परस्य स्कन्देर्वा षो भवति—अतसंज्ञके परतः । विष्कंत्ता । विस्कंत्ता । अत इति किं।विस्कन्नः।विष्कन्नवान्।

परे ॥५९॥ परे परस्य स्कन्देर्वा षो भवति। परिष्कंता, परिस्कंता। पृथग्सूत्रात् तेऽपि स्यात्। परिष्कण्ण परिस्कन्नः । परिष्कण्णवान् परिस्कन्नवान् ।

स्फुरिस्फुल्योर्निर्नेः ॥ ६० ॥ निर्निभ्यां परयो स्फुरिस्फुल्यो षो वा स्यात् । निष्फुरति, निःस्फुरति । निष्फुरति, निस्फुरति । निष्फुलति । नि स्फुलति । निष्फुलति,निस्फुलति ।

वे ॥६१॥ वेरुत्तरयोस्तयोः षो वा स्यात् । विष्फुरति । विस्फुरति । विष्फुलति।विस्फुलति ।

*स्कम्नः षः ॥ ६२ ॥ वेःपरस्य स्कम्नातेः षो भवति । विष्कम्नाति । विष्कभिता । विष्कम्भकः । पुन षो नित्यार्थः ।

इणः षीध्वंलुङ्लिटां धो ढः ॥ ६३ ॥ इण परेषां षीध्वं लुङ्लिटां धकारस्य ढो भवति । चेषीढ्वं । च्योषीढ्वं । अचेढ्वं।अच्योढ्वं।चकृढ्वे । ववृढ्वे । इण इति किं । पक्षीध्वं । एषामिति किं । स्तुध्वे ।

* वेऽम्नः ॥ ६४ ॥ इण परात् इट्भिन्नां परेषां तेषां धकारस्य ढो वा स्यात् । लविषीढ्वं । लविषीध्वं । अलविढ्वं । अलविध्वं । लुलुविढ्वे । लुलुविध्वे । माहिषीढ्वं । माहिषीध्वं ।

सेऽग्गुलेः संगे ॥ ६५ ॥ अगुलेःपरस्य संग सकारस्य से षो भवति । अंगुलिषंगः।से इति किं। अगुलेः संग ।

भीरोः स्थाने ॥ ६६ ॥ भीरोः परस्य स्थानस्य से षो भवति । भीरुष्ठानं ।

ज्योतिरायुषः स्तोमः ॥ ६७ ॥ आभ्यां स्तोमस्य षो भवति से । ज्योतिष्टोम । आयुष्टोम ।

* स्तुत्स्याग्ने ॥६८॥ अग्नेःपरयोःस्तुत्स्तोमयोः से षो भवति । अग्निष्टुत् । अग्निष्टोम ।

मातृपितु स्वसुः ॥ ६९ ॥ आभ्यां स्वसु सकारस्य षो भवति से । मातृष्वसा।पितृष्वसा ।

वाऽलुपि ॥ ७० ॥ अलुपि से ताभ्यां स्वसु षो वा स्यात् । मातुः ष्वसा । मातुः स्वसा । पितु ष्वसा । पितु स्वसा ।

* मातुर्गमण्यसने ॥ ७१ ॥ मातुःपरस्मात्

* पद्दाम ॥८९॥ पदात्परस्य सकारस्य षो न स्यात् । दधि सिंचति । मधु सुनोति ।

* बहोः ॥९ ॥ बहोरुत्तरस्य सस्य षो न स्यात् । बहुसक् ।

सात् ॥ ९१ ॥ सातः सस्य षो न स्यात् । मुनिसात् । अग्निसात् । दधिसात् । मधुसात् ।

सिचो यङि ॥ ९२ ॥ सिचेः सस्य षो न भवति यङि परतः । सेसिच्यते । अभिसेसिच्यते ।

सेधो गतौ ॥ ९३ ॥ सेधतेर्गत्यर्थस्य षो न स्यात् । प्रतिसेध गाः । अभिसेध गाः । गता विति किं ? प्रतिषेधति पापं मुनि ।

निस्तब्धप्रतिस्तब्धौ ॥ ९४ ॥ नि प्रतिभ्यां स्तंभे षत्वाभावो निपात्यते । निस्तब्ध । प्रतिस्तब्ध । ॥

सोढ ॥९५॥ सोढभूतस्य सहेः षो न स्यात् । विसोढा । परिसोढुं । परिसोढव्यं । सोढ् भूतस्येति किं ? निषहते । विषहते ।

* स्तंभुसिवुसहां च्ञि ॥ ९६ ॥ एषां च्ञि परतः षत्वं नास्ति । व्यस्तस्तंभत् । पर्यसीषिवत् । व्यसीषहत् ।

सुनः सन्स्ये ॥ ९७ ॥ सुनः सनि स्ये च परतः षकारादेशो न स्यात् । सुसूषतीति सुसू । अभिसोष्यति ।

सस्स्वंजस्थास्थिति ॥९८॥ सदिस्वंजिभ्यो आत्परयोर्स्थिति परतः षो न स्यात् । निषसाद । अभिषस्वंजे । अभिषस्वजे ॥

* पूो नो णोऽभिन्ने ॥ ९९ ॥ षकाररेफाभ्यां परस्य नकारस्य णत्वं भवत्यभिन्नपदे चेत्तौ निमित्तनिमित्तिनौ भवतः । कुष्णाति । पुष्णाति । निष्केण । मूर्णेन । वर्णेन । दीर्घेण । पुष्पेण । रेफेण । गिरिणा । मेरुणा । वर्णेन । गर्भेण । गर्भेण । अभिन्न इति किं ? मुनिर्नयति स्वर्गे ॥

* माक्पदस्यात् स्तौ ॥ १०० ॥ पूर्वपदस्था त्परस्य नकारस्य णकारादेशो भवति स्तौ । पुष्पणखी । रेमणी । चर्मणखी । भीमखी स्त्री । स्ताविति किं ? दीर्घनासिकः ।

* अगः ॥ १०१ ॥ गकारान्तान्नकारस्य णो न भवति । ऋग्मन ।

*कोट्राद्भ्यो वनं ॥ १०२ ॥ कोटरादिभ्यः परं वन मित्यस्य णत्वं स्तौ । कोटरावणं । मिश्रकावणं । सिध्रकावणं । सारिकावणं । पुरगावणं । एभ्य इति किं ? चित्रवनं । मनोहरवनं ।

मोप्रस्वार्निःशरेक्षुप्लक्षपीयूक्षाकार्ष्यरीम्र खदिरात् ॥ १ २ ॥ एभ्यो वननकारस्य णो भवति । प्रवणं । अम्रेवणे । अन्तर्वणे । निर्वणं । शरवण । इक्षुवणं । प्लक्षवणं । पीयूक्षावणं । कार्ष्यवणं । आम्रवण । खदिरवणं ॥

* द्विव्यक्षरेभ्यो इक्षौषधिभ्योऽनिरीकादिभ्यो वा ॥ १०४ ॥ द्विव्यक्षरेभ्यो इक्षौषधिवाचिभ्य निरीकादिरहितेभ्यो वनस्य नस्य णो वा स्यात् । दारुवण दारुवनमत्वरीवणं,अत्वरीवनं । दूर्वावणं । दूर्वावनं । व्रीहिवणं, व्रीहिवनं । कोद्रववणं, कोद्रववन । द्विव्यक्षर इति किं देवदारुवनं । भद्र दारुवनं । रामभापवनं । इक्षौषधिभ्यः इति किं ? पितृवन । अनिरीकादिभ्य इति किं ? इरीकावनं कुबरवनं । तिमिरवनं । समीरवनं ।

+ ग्रामाग्राम्नीः ॥ १०५ ॥ आभ्यां नी नकारस्य णो भवति । ग्रामणी । अग्रणी ।

* नस ॥ १०६ ॥ गे परो नसो णकारादेशो भवति । प्रणसा नासिका अस्य-प्रणसं मुखं । निर्णस ।

अतोऽन्हः ॥ १ ७ ॥ अकारान्तात्परस्याह्नस्य णत्वं भवति । पूर्वाह्णः । अपराह्णः । अत इति किं ? निरह्न । दुरन्हः ।

